आरात्ति मे सुतं, इति उपप्रदर्शनार्थे 'मे' इति मया श्रुतं, ज्ञातमित्यर्थः, किमुक्तं भवति ?-नाग इव स्नेहबन्धनं छित्त्वा आत्मानं सद्धं वसहिं नय, एतत् पथ्यं हे महाराजा!, एतत् मया श्रुतं साधुसमीपे। 'चइत्ता विपुलं रज्जं०'॥४८९-४११॥सिलोगो, त्यक्त्वा विपुलं-विस्तीर्णं राष्ट्रं-राजं, काम्यंत इति कामाः, प्रार्थ्यन्त इत्यर्थः, भुज्यंत इति भोगाः, अतस्ते भोगा दुःखं त्यज्यन्त इति दुस्त्यजाः, णिव्विसया-सद्दादिविसयरहिया णिरामिसा-धणामिसेण रहिता निण्णेहा-पुत्तदाराइसु णिम्ममत्ता णिप्परिग्गहा दुपदादिसु। 'सम्मं धम्मं वियाणित्ता०'॥४९०-४११॥ सिलोगो, 'सम्मं' जहावस्थितं संसारे सब्भावो धम्मो तं सम्मं वियाणित्ता जहा कामभोगा सयणधणादि वा न परित्राणाय अतो चिच्चा कामगुणे वरे, वरे-प्रधाने, तवं परिगृह्य इत्यर्थः, प्रकर्षेण गृह्य प्रगृह्य, 'अहक्खातं'ति यथा ख्यातं तथा प्ररूपितं, अथवा कामं वीतरागचरितमित्यर्थः, घोरं-भयानकं, कातराणां दुरनुचरं, घोरो परक्कमो जेसिं ते घोरपरक्कमा, दुरनुचरपराक्रमा इत्यर्थः॥'एवं ते कमसो बुद्धा०'॥४९१-४११॥ सिलोगो, एवमनेन प्रकारेण कमसो-परिवाडीए बुद्धा संबुद्धा सव्वे-छावि जणा धम्मपरायणा-धर्मोद्घाता 'जम्ममच्चुभउव्विग्गा' जननं जन्म, मरणं मृत्युः,जन्मश्च मृत्युश्च जन्ममृत्यू तावेव भयं जन्ममृत्युभयं तस्स, भयस्सुव्विग्गो भीतो-त्रस्तः दुरनुचरः 'दुक्खस्संतगवेसिणो' दुक्खस्स अंतो-मोक्खो तं गवेसंति मार्गतीत्यर्थः,'सासणि विगत०'॥४९२-४११॥ सिलोगो,'शासु अनुशिष्टौ' शास्तीति शासनं, विगतमोहो-केवलणाणी तेसिं सासणे 'पुव्विं भावणाभाविया' पुव्वभवे संजमवासणाए भाविता, विसेसिता इत्यर्थः, पुव्वद्धं कण्ठ्यं। इदाणिं तेसिं णामुक्कित्तणा किज्जइ-'राया सह देवीए०'॥४९३-४११॥ सिलोगो, राया उसुयारो णाम सह कमलावतीए महादेवीए, माहणो भिगू पुरोहितो, माहणी जसा, ते य दारगा, सव्वेवि एते परिणिव्वुता,निव्वाणं निर्वृतिः,परि-

निव्वुए इति बेमि। णया: पूर्ववत् ॥ चउद्दसण्ह उत्तरज्झयणाण चुण्णी सम्मत्ता १४ ॥

उक्तं चतुर्दशमध्ययनं, इदानीं पंचदशमुच्यते–तस्य कोऽभिसम्बन्धः ?, सम्बन्धो वक्तव्यः, स च त्रिविधः, तद्यथा–सूत्र-प्रकरणाध्यायसम्बन्धस्त्रिविधः स्मृतः। केचित्तु अविशेषेण, अतः सम्बन्ध इष्यते ॥ १ ॥ केचित्तु आचार्या अविशेषेण-एकविधमेव सम्बन्धं व्याचक्षते, तद्यथा–सूत्रस्य सह सूत्रेण सम्बन्धः, यथा चतुर्दशमे धर्मकर्मसूत्रं एते परिणिव्वुतेति, पंचदशमस्य आदि-सूत्रं 'मोणं चरिस्सामि'त्ति, परिनिर्वाणं च मुनेरेव भवतीत्येष सम्बन्धः, तथा प्रकरणसम्बन्धो यथा चतुर्दशमे धर्मकथाप्रकरणं व्यावर्ण्यते एवं पञ्चदशमेऽपि धर्मकथैव वर्ण्यते, तथा अध्ययनसम्बन्धः–चतुर्दशमेऽध्ययने अनिदानस्य गुणा व्यावर्णिताः, एवं पञ्चदशमेऽपि अनिदानगुणसंपन्न एव भिक्षुर्भवति, अथवा सामान्येनाध्ययनसम्बन्ध एव वर्ण्यते, अनेन सम्बन्धेनायातस्यास्याध्य-यनस्यानुयोगद्वारचतुष्टयं-उपक्रमो निक्षेपः अनुगमो नय इति, 'क्रमु पादविक्षेपे' उपक्रमणमुपक्रमः उपक्रम्यते वाऽनेनेत्युपक्रमः, तथा निक्षेपः 'क्षिप् प्रेरणे' निक्षेपणं निक्षेपः, तथा अनुगमः 'गमॄ सृ पृ गतौ' अनुगमनमनुगमः, अनुगम्यते वाऽनेनेत्यनुगमः, अनुग-म्यते वाऽनेने(स्मादि)त्यनुगमः, तथा नयः 'णीञ् प्रापणे' नयनं नयः, नीयते वाऽनेनेति नयः, उपक्रमो णामादिकः षड्विधः, भावो द्विविधः-गुरुभावोपक्रमः शास्त्रोपक्रमश्च, अयं गुरुभावोपक्रमः–जो जेण पगारेणं तुस्सति करेति णयाणुवित्तीहिं। आराहणाए मग्गो सोच्चिय अब्भाहतो तस्स ॥ १ ॥ शास्त्रोपक्रमः आनुपूर्व्यादिकः षड्विधः, स च पूर्वोक्त एवमनुयोगद्वारे, निक्षेपस्त्रिविधः, ओघनिष्पन्नः नामनिष्पन्नः सूत्रालापकनिष्पन्नश्चेति, ओघनिष्पन्नः पूर्वोक्तः, नामनिष्पन्ननिक्षेपः सभिक्षुकामिति भिक्षुशब्दस्य निक्षेपः– 'निक्खेवो भिक्खुंमी चउव्विहो०'॥३७३-४१३॥गाथा, इत्यादि, नामस्थापने पूर्ववत्, द्रव्यभिक्षुर्द्विविधः–आगमनोआगमाभ्यां,

आगमतः पूर्वोक्तः, नोआगमतस्त्रिविधः-ज्ञशरीर० भव्यशरीर० व्यतिरिक्तो, व्यतिरिक्तश्च निह्नवादि, मोक्षाधिकारशून्यत्वाद्, द्रव्यं कुकर्मग्रहस्तं भिनत्ति असौ भावभिक्षुः, अथवा भेत्ता भेदनं भेत्तव्यं चेति द्रव्ये भावे च, द्रव्ये भेत्ता रहकारादि भेदनं परश्वादि भेत्तव्यं काष्ठादि, भावतः भेत्ता साधुः भेदनं तपादि भेत्तव्यानि अमूनि रागद्वेषौ दण्डास्त्रयः गौरवास्त्रयः विकथाश्चत्वारः (तत्र:) संज्ञाश्चत्वारः (तत्र:) कषायाश्चत्वारः प्रमादाः पंच एवमादीनि भेत्तव्यानि, भिन्दं तु भावभिक्षुर्भवति, उक्तो नामनिष्पन्नो निक्षेपः। इदानीं सूत्रालापकनिष्पन्नो निक्षेपः(स च)अवसरप्राप्तोऽपि न निक्षिप्यते, कुतः?, सूत्राभावात्, असति सूत्रे कस्यालापकाः?, सूत्रं सूत्रानुगमे, सूत्रमुच्चारणीयं, सोऽनुगमो द्विविधः-सूत्रानुगमो निर्युक्त्यनुगमश्च, सूत्रानुगमे सूत्रमुच्चारणीयं अस्खलितादि, निर्युक्त्यनुगमस्त्रिविधः-निक्षेपनिर्युक्त्यनुगमः उपोद्घातनिर्युक्त्यनुगमः सूत्रस्पर्शिकनिर्युक्त्यनुगमश्चेति, निक्षेपनिर्युक्त्यनुगतैव नामस्थापनादिप्रपञ्चेन, उपोद्घातनिर्युक्त्यनुगमः इमाहिं दोहिं मूलदारगाहाहिं अणुगंतव्वो 'उद्देस०'॥ गाथा,'किं कतिविधं०'॥ गाथा, एवमवस्थिते सूत्रस्पर्शिकादि चतुष्टयं युगपद्गच्छन्ति, तथा चोक्तं-'एत्थ य सुत्ताणुगमो सुत्तालावगकतो य निक्खेवो। सुत्तफासियणिज्जुत्ती णया य पतिसुत्तमायोज्जा ॥ १ ॥' सूत्रानुगमे सूत्रं, तच्चेदं-'मोणं चरिस्सामि०' ॥ ४९४ ॥ वृत्तं, मन्यते तिकालवस्थितं जगदिति मुनिः, मुनिभावो मौनं, चरिस्सामो 'चर गतिभक्षणयोः' मुनित्वमाचरिष्यामः, 'समिच्च धम्मं' सं एत्य समेत्य 'इण् गतौ' धम्मं प्राप्य इत्यर्थः श्रुतधर्मं, चारित्रधर्मं चरिस्सामो, ज्ञानदर्शनचारित्रतपोभिः 'उज्जुकडे' ऋजुभावं कृत्वा 'सोधी उज्जुयभावस्से'ति, 'णियाणछिण्णे'त्ति 'दाव् लवने' प्राणातिपातादिबन्धकरणरहितः छिन्नबन्धनोऽभिधीयते, अप्रमत्तसंयत इत्यर्थः, 'संथवं जहिज्ज' संस्तवो द्विविधः-संवाससंस्तवः वचनसंस्तवश्च, अशोभनैः सह संवासः, वचनसंस्तवश्च तेषा-

मेव यः तत्परित्यजेत्, 'अकामकामे' अकामः-अपगतकामः, कामो द्विविधः-इच्छाकामो मदनकामश्च, अपगतकामस्य या इच्छा वा कामयति, सा च कामेच्छा मोक्षं कामयतीति, प्रार्थयतीत्यर्थः, 'अण्णायएसी परिव्वए' अज्ञातैषी, अज्ञातमज्ञातेन एषते-मिषते अन्नौ अज्ञातैषी, निश्रादिरहित इत्यर्थः, परिव्रजेत्-समन्ताद् व्रजेत्, सर्वप्रकारं सर्वभावेनेत्यर्थः, य एवंगुणविशिष्टः स भिक्षुर्भवति। 'राओवरयं चरिज्ज लाढे०'॥४१५-४२०॥ इत्यादि, रात्रादुपरतं चरेत्, किमुक्तं भवति?, रात्रौ न भुङ्क्ते, रात्रौ गतादि क्रियां न कुर्यात्, विरते विरतीभावात्, विरतिग्रहणाच्चारित्रं गृह्यते, पंच महाव्रतादिकं कर्मचयरिक्तीकरणे चारित्रं, वेदं वेत्तीति वेदवित्, वेदः श्रुतज्ञानं, संपन्नो भवेदित्यर्थः, अत्ता रक्षितो चारित्रात्मरक्षितो भवेत्, प्राज्ञो-विदुः, संपन्नो आयोपाय-विधिज्ञो भवेत्, उत्सर्गापवादद्रव्यापायपदादिको य उपायः, 'अभिभूय परीसहान्' अभिभूय तिरस्कृत्य, 'सव्वदंसी' आ-त्मवत्सर्वदर्शी भवेत्, 'जे कम्हिइयि न मुच्छिए' यः कस्मिंश्चिदपि न मूर्छितो भवति, न रागं गच्छतीत्यर्थः, प्रतिपक्षेण द्वेषं न गच्छतीति स भिक्षुरिति॥'अक्कोसवहं०'॥४१६-४२०॥ इत्यादि, एवं वक्ष्यमाणेषु रागद्वेषविप्रमुक्तेन भवितव्यं, यदि कश्चिदाक्रोश-यति वन्धं वा करोति, तद्विचिंतयित्वा आलोच्य धीरो भवेत्, न क्षोभः करणीयः, कथम्?-आक्रोशति मां बालः तत्र लाभ एव मन्तव्यः, दिष्ट्या वा यद् मां न ताडयति, ताडयत्यपि बाले लाभ एव मन्तव्यः, दिष्ट्या च यन्मां जीवितान्न व्यपरोपयति, एव-मादि, तथा च "आक्रुष्टेन मतिमता तत्त्वार्थविचारणे मतिः कार्या। यदि सत्यं का कोपः? स्यादनृतं किन्तु कोपेन ? ॥ १ ॥" मुनिर्भूत्वा गच्छेत्, ज्ञानी भूत्वा संयमं अव्यग्रमनाः चरेत्, पापपक्षित्यमात्मगुप्तः, सचारित्रात्मको गुप्तो भवेत् इति, अव्यग्रमनसा अप्रहृष्टेन च भवितव्यं, कथं?, दुःखे समुत्पन्ने न शोकार्त्तेन भवितव्यं, सुखे च समुत्पन्ने न प्रहृष्टेन भवितव्यं, एवं सर्वमपि

रागद्वेषात्मकं यः सहते क्षमते स भिक्षुर्भवति । 'पंतं सयणासणं०'॥४९७-४२०॥इत्यादि, एषु च कारणेषु अरक्तद्विष्टेन भवितव्यं, पंतं-निकृष्टं अशोभनं शयनासनानि भजित्वा-सेवित्वा 'भज् सेवायां' शीतोष्णं च सेवित्वा, नानाप्रकारं च दंसमसकादि प्राप्य, नानाप्रकारं मच्छुणपिंशुकषट्पदादि, अव्यग्रमनसा असंप्रहृष्टेन भवितव्यं, रागद्वेषविप्रमुक्तेनेत्यर्थः, य एवत् कृत्स्नं परीसहजातं सहते स भिक्षुर्भवति॥'नो सक्किपमिच्छइ०'॥४९८-४२०॥ इत्यादि, एषु च सत्कृत्यादिषु रागो न करणीयः, यदि कश्चित् सत्कारं करोति, अभ्युत्थानादिकं, न वदिच्छेन्न प्रार्थयेत्, शोभनो कारः सत्कारः, स च न पूजामिच्छति, वस्त्रादिकं, न वन्दनकमिच्छति, किमुक्तं भवति ?-एषु क्रियमाणेष्वपि रागं न गच्छतीत्यर्थः, सः संयतः सुव्रतस्तपस्वी च भवति, यश्च ज्ञानादिसहितः चारित्रात्मगवेषी च स भिक्षुर्भवति॥'जेण पुणो जहाइ जीवियं०'॥४९९-४२०॥ इत्यादि, 'ओहाक् त्यागे' येन प्रकारेण संयमजीवितं परित्यजति तन्न करोति, येन मोहनीयः कर्म बध्नाति तच्च न करोति, कृत्स्नं-सम्पूर्णं, कृष्णं च अशुभमित्यर्थः, 'नियच्छति' प्राप्नोति बध्नातीत्यर्थः, तच्च न, जहाति, नरनारीप्रहाणार्थे परित्यागः, यश्च कौतुकं न गच्छति स भिक्षुर्भवति । 'छिन्नं सरं भोमं०'॥५००-४२०॥ इत्यादि, एतानि च जानन्नपि न प्रकाशयेत्, छिन्नमिति वस्त्रच्छेदः काष्ठादीनां वा छेदात्, शुभाशुभं न प्रकाशयेत्, अधिकरणमितिकृत्वा, एवं सर्वत्र अप्रकाशता, पुरुषः दुंदुभिस्वरो काकस्वरो वा एवमादिस्वरव्याकरणं, भौमादित्वात् भौमः, अकाले जं पुष्पफलं, स्थिराणां चलनं, प्रतिमानां जल्पनादि, अन्तरिक्षादिग्दाहपांशुवृष्ट्यादयः, दिव्या ग्रहयुद्धादि, 'सुविणं' स्वप्नलक्षणं, तथा पुरुषस्त्रीहस्त्यश्वादिलक्षणं, दण्डो यो यस्मिन् अपराधे भवति, 'वत्थुविज्जा' वास्तुलक्षणं, पुरुषादीनां अंगविकारः, कस्य कीदृशं अंगं शोभनं भवति ?, षड्ज ऋषभगन्धारादीनां स्वराणां विजयः-अभ्यास

इत्यर्थः, एवमादिभिर्विद्यादिभिर्यो न जीवति स भिक्षुर्भवति। 'मंतं मूलं०'॥५०२४२०॥ इत्यादि, मन्त्रान् साधुकरणान् ज्ञात्वापि न प्रकाशयेत्, एवं मूलानि, तथा विविधान् वैद्यचिन्तान् वमनविरेचनधूमनेत्रस्नानादिकान् न प्रकाशयेत्, तथा आतुरशरणं चिकित्सार्थे न कुर्यात्, तं जाणणापरिण्णाए परिजाणिऊं अणंतरं पच्चक्खाणपरिन्नाए प्रत्याख्यानं करोति स भिक्षुर्भवति। 'खत्तियगण०'॥५०३-४२०॥इत्यादि, क्षत्रिया-राजानः,गणा-मल्लगणादयः,'उग्गा'दण्डपाशिकादयः,राजपुत्रा ब्राह्मणभोगिका, विविधाश्च शिल्पिनः, एतेषां निःशीलानां प्रशंसां पूजनं वा न करोति स भिक्षुर्भवति। 'गिहिणो०' ॥ ५०३ ॥ इत्यादि, गृहस्था ये प्रव्रजितेन दृष्टाः अप्रव्रजितेन वा, तेषां निःशीलानामिहलोकफलार्थं यः संस्तवं न करोति स भिक्षुर्भवति। 'सयणासण०' ॥५०४-४२०॥इत्यादि, शयनासनपानभोजनानि, परकीयं यदि तं परो न ददाति प्रतिषेधयति वा, प्रतिषेधितो वा निर्वृत्तः सन् यः प्रद्वेषं न करोति स भिक्षुर्भवति।'जं किंचाहार०'॥५०५-४२०॥इत्यादि, यत्किंचिदाहारं परतो लब्ध्वा यस्तेन आचार्योपाध्यायादि त्रिविधेन नानुकम्पति, 'जइ मे अनुग्गहं कुज्जा, साधु होज्जामि तारिओ' यदि मनसा एवं चिंतयति, वाचा सन्निदेशेण यथापरिपाट्या निमन्त्रयति, कायेन च परार्थेन ददाति स भिक्षुर्भवति, यः पुनर्मनसा वचसा कायेन च सुसंवृत्तः स भिक्षुर्भवति। 'आयामगं चेव०' ॥५०६ ४२०॥ इत्यादि, आयामादि प्रसिद्धमेव नीरसं पिंड पानकं वा लब्ध्वा'णो हीलये'न द्वेषं गच्छेत्, प्रान्तकुलादि च यः परिव्रजति पर्यटति स भिक्षुर्भवति। 'सद्दा विविहा०' ॥ ५०७ ॥ इत्यादि, शब्दा विविधा नानाप्रकारा लोके भवन्ति, दिव्या मानुष्यकाः तैरश्चाश्च भीमा भयानकाः भयभैरवाः सुतरां उत्त्रासनका ओराला-महान्ता उपसर्गादिषु भवंति यस्तान् श्रुत्वा सत्वेन न बिभेति स भिक्षुर्भवति। 'वायं विविहं०' ॥५०८-४२०॥ इत्यादि, वादं विविधं-नानाप्रकारं समिच्च सं एत्य-ज्ञात्वा

'लोए' लोकप्रवादं श्रुत्वा 'सहिते' सहितो ज्ञानदर्शनचारित्रे स्वयाणुगतो-खेदेन अनुगतो, खेदो विनयवैयावृत्यस्वाध्यायादिषु, प्रज्ञश्च एतेष्वेव कोवियप्पा-कोविदात्मा ज्ञातव्येषु सर्वेषु, परिचेष्टित इत्यर्थः, प्राज्ञोऽभिभूय परीषहान्, आत्मवत् सर्वदर्शी, उपशान्तो विहेडनं प्रपञ्चनं, वाचा कायेन च परापवाद इत्यर्थः, अनपवादी पूर्वोक्तगुणायुक्तश्च यः असौ भिक्षुर्भवति । 'असिप्पजीवी०' ॥५०१-४२०॥ इत्यादि, न शिल्पेन जीवति, नास्य गृहं विद्यत इत्यगृहः, अमित्रः जितेन्द्रियः बाह्याभ्यन्तरसंगविप्रमुक्तः अणु-स्तोकं अल्पं, अल्पकषायी, लघूनि-निःसाराणि निष्पावादीनि तान्यपि अल्पानि भक्षते, शरीरगृहमपि त्यक्त्वा एके रागद्वेषरहिता, एभिः गुणैर्युक्तो यः स भिक्षुर्भवति । इदानीं नयाः-णीञ् प्रापणे, नयन्तीति नयाः, नयंति गमयंति प्राप्नुवंति वस्तु ये ते नयाः, अथवा द्रव्यार्थिकपर्यायार्थिकौ, अथवा निश्चयव्यवहारौ, अथवा सप्त नयाः, अथवा पंच नयाः, एकैकः शतभेदः, एवं सप्त पंच वा नयनशतानि भवन्ति, अथवा ज्ञाननयश्चरणनयश्च, एवमेते आत्मीयेनाभिप्रायेण वस्तुगमका अस्मिन्नध्ययने भवंतीति । अयं ज्ञाननयः 'णायंमि गिण्हियव्वे०' ॥ गाहा, अयं पुनश्चरणनयः'सव्वेसिंपि नयाणं'॥ गाथा, इति परिसमाप्तौ उपप्रदर्शने, बेमि-ब्रवीमि आचार्योपदेशात्, न स्वमनीषिकया ॥ पञ्चदशमध्ययनं समाप्तम् ॥

उक्तं पञ्चदशमध्ययनं, इदाणिं पोडशमं, तस्य कोऽभिसम्बन्धः ?, सम्बन्धो वक्तव्यः, स सम्बन्धस्त्रिविधः, तद्यथा-'सूत्रप्रकरणाध्याय' इत्यादि, सूत्रप्रकरणसम्बन्धौ उक्तौ, अध्यायसम्बन्धः भिक्षुगुणाः पञ्चदशेभ्यो वर्णिताः, भिक्षुश्च ब्रह्मचर्यव्यवस्थितो भवति, इह च पोडशेऽध्ययने ब्रह्मचर्यगुप्तयो वक्ष्यन्ति, अनेन सम्बन्धेन आयातस्यास्याध्ययनस्यानुयोगद्वारचतुष्टयं पूर्ववद् व्यावर्ण्य नामनिष्फण्णे निक्षेपे दसबंभचेरसमाहिठाणमिति णाम, दशशब्दस्य ब्रह्मशब्दस्य चरणशब्दस्य समाधिशब्दस्य स्था-

नशब्दस्य च निक्षेपः कर्त्तव्यः,दश एकेन विना न भवन्ति।।त एकस्य तावन्निक्षेपः क्रियते,स सप्तप्रकारः'णामं ठवणा०'॥३७९-४२१॥ इत्यादि, णामैककं देवदत्तादि, स्थापनैककं द्विविधं-सद्भावे असद्भावे च, सद्भावस्थापनैककं लेप्यहस्त्यादि, असद्भावे अक्खादि, द्रव्यैककं सचित्तादि, मातृकापदैककं'उप्पण्णेति वा०'संग्रहैककं ग्रामादि, पर्यायैककं एको जीवपर्यायो नारकादि, अजीवपर्यायो वा गन्धादि, भावैककं औदयिको भाव इति । इदानीं दशशब्दस्य निक्षेपः-'दसस्स अ छक्को०'॥३८०-४२२॥इत्यादि,नामदशा दश नामानि देवदत्तयज्ञदत्तादीनि,स्थापनादश स्थापनाधा(दशा)नां स्थापना, सद्भावे असद्भावे च, द्रव्यदश दश सचित्तादीनि द्रव्याणि, क्षेत्रदश दश आकाशप्रदेशा दशसु वा क्षेत्रेषु यद् द्रव्यमवगाढं,कालदश दश समया दशसमयस्थितिकं वा यद् द्रव्यं,भावदशा पर्यायद्वयं(दशकं),जीवपर्याया अजीवपर्यायाश्च,देशकालपर्याया,(क्रोधादयः)नरकादिगतयश्चत्वारः, साकारोपयोगोऽनाकारोपयोगश्च,अमी जीवपर्याया दश,अजीवपर्याया रूपरसगन्धस्पर्शशब्दाः शुभा शुभाश्च पर्यायाः॥'बंभंमी उ चउक्कं०'॥३८१-४२२॥इत्यादि,नामब्रह्म ब्रह्म इति यस्य नाम, ठवणाबंभं वण्णुप्पत्ती जहा बंभचेरेसु, द्रव्यब्रह्म अज्ञानीनां बस्तिनिग्रहः, मोक्षाधिकारशून्यत्वात्, भावेऽपि बस्तिनिग्रहः एव ब्रह्मचर्यमभिधीयते ज्ञानिनां मोक्षपथास्थितानां, तस्य रक्षणार्थममूनि वसत्यादीनि स्थानानि रक्षणीयानि सूत्राभिहितानि।'चरणे छक्को०' ॥३८३-४२२॥ इत्यादि, चरणे षट्को निक्षेपः, नामस्थापने पूर्ववत्, द्रव्यचरणं द्विविधं-गतौ भक्षणे च वर्त्तते, गतौ भूम्यां गच्छति, चरणे मोदकादीन् भक्षयति, क्षेत्रचरणं यस्मिन् क्षेत्रे गच्छति भक्षयति वा, यस्मिन् वा क्षेत्रे चरणं व्यावर्ण्यते, एवं कालचरणमपि, भावचरणं गुणानां चरणं ।'समाधीए उ चउक्को०'॥३८४-४२२॥इत्यादि,समाधिशब्दस्य चतुर्धा निक्षेपः, नामस्थापने पूर्ववत्, द्रव्यसमाधिः येन द्रव्येण समाधिः उत्पद्यते, भावसमाधिः ज्ञानदर्शनचारित्रतपआत्मिका, स्थाप-

ना(स्थान)शब्दस्य पञ्चदशप्रकारो निक्षेपः'नामं ठवणा०'॥३८५-४२२॥इत्यादि,नामस्थापना यो यस्य नाम्नः अर्हो, योग्य इत्यर्थः, स्थापनस्थापनं यो यस्य स्थापनार्हो, यथाऽऽचार्यगुणोपेत आचार्यः स्थाप्यते, द्रव्यस्थानं सर्वद्रव्याणां स्थानमाकाशः, क्षेत्रस्थानं क्षेत्रमुख्यमाकाशमुख्यं तस्य यच्चात्मस्थानं, 'अद्धा' इति कालस्याख्या तस्य स्थानं समयक्षेत्रं अर्द्धतृतीयद्वीपसमुद्ररूपं, ऊर्ध्वस्थानं साधोः कायोत्सर्गस्थानं, 'उपरतिस्थानं' उपरमणमुपरतिः, प्राणातिपातादीनां विरतिरित्यर्थः, वसतिस्थानं साधोः स्थानं, स्त्री-पशुपण्डकविवर्जिता वसतिः, संयमस्थानं संयमाध्यवसायविशेषाः, प्रग्रहस्थानं धनुषः खड्गस्य वा ग्रहणस्थानं, समपदं वैशाख-मित्यादि, अचलस्थानं यस्मिन् स्थाने स्थितस्य चलनं न भवति, यथा सिद्धस्य, गणनास्थानं अक्षं(एकं)दश शतं सहस्रमित्यादि, संधनास्थानं अग्रं मूलेन सह संबध्यते वस्तुनि, न अग्रं, अग्रेण सह, मूलं वा मूलेन सह संबध्यते, भावस्थानं, सर्वेषां भावाना-मौदयिकादीनां जीवे स्थानं, आश्रय इत्यर्थः ॥ उक्तो नामनिष्पन्नो निक्षेपः । इदानीं सूत्रालापकस्य विषयः, स च अवसरप्राप्तो-ऽपि न निक्षिप्यते, कुतः ?, सूत्राभावात्, असति च सूत्रे कस्य आलापकाः ?, सूत्रं च सूत्रानुगमे भविष्यति, सोऽनुगमो द्विविधः-सूत्रानुगमो निर्युक्त्यनुगमश्च, निर्युक्त्यनुगमस्त्रिविधः-निक्षेपनिर्युक्तिः उपोद्घातनिर्युक्तिः सूत्रस्पर्शिकनिर्युक्तिश्च, निक्षेपनिर्युक्तिः अनुगतैव, उपोद्घातनिर्युक्तिः इमाहिं दोहिं मूलदारगाहाहिं अणुगंतव्वा, तंजहा-"उद्देसे०"॥गाहा॥"किं कतिविहं०"॥ गाहा, एवं सूत्रानुगमो सूत्रालापकनिष्पन्नो निक्खेवो सूत्रस्पर्शिकनिर्युक्तिर्नयाश्च युगपद्गच्छन्ति, तथा चोक्तं-'एत्थ य सुत्ताणुगमो सुत्तालाव-यकओ य निक्खेवो । सुत्तप्फासियनिज्जुत्ती नया य पतिसुत्तमायोज्जा ॥ १ ॥' सूत्राणुगमे सूत्रमुच्चारणीयं, तच्चेदं- "सुअं मे आउसं तेण भगवया एवमक्खायं० (सूत्रं२-४४३) ॥ श्रुतं मया हे आयुष्मन्! तेन भगवता एवमाख्यातं, हे आयुष्मन्!

इति शिष्यामन्त्रणं, सत्स्वप्यन्येषु जात्यादिषु आमन्त्रणेषु आयुरेव गरीयः, कुतः ?, आयुषि सति सर्वाण्येव जात्यादीनि भवति, के एवमाह-सुधर्मास्वामी, जम्बुनामानं शिष्यमाश्रित्य ब्रवीति, यथा मया भगवतः समीपे श्रुतं, अनेन शिष्याचार्यप्रबन्धः प्रद-र्शितो भवति, अथवा श्रुतं मया आयुषि सति भगवता, जीवता भगवता एवमाख्यातमितियावत्, अनेन क्षणभङ्गनिरासः कृतो भवति, अथवा श्रुतं मया आवसताऽमु, समीपे निवसता इत्यर्थः, अनेन गुरुकुलवासः ख्यापितो भवति, नित्यं गुरुकुलवासिना भवितव्यमिति, अथवा श्रुतं मया आमृशता, गुरुपादाविति वाक्यशेषः, विनयेन मया लब्धं इतियावत्, अनेन विनयमूलो धर्म्मः प्रदर्शितो भवति, 'इह खलु थेरेहिं' इत्यादि, इह अस्मिन् प्रवचने, खलु अवधारणे, इहैव नान्यस्मिन् प्रवचने, धर्म्मे स्थिरीक-रणात् स्थविराः तैर्भगवद्भिः स्थविरैः ऐश्वर्यादिसम्पदुपेतैर्दश ब्रह्मचर्यस्थानानि, प्रज्ञप्तानि कथितानीत्यर्थः, यानि भिक्षुः भिक्षुश-ब्दश्च पूर्वोक्तः, श्रुत्वा निशम्य, अवधार्येत्यर्थः, 'संजमबहुले' संयमः-पृथिवीकायादिकः संवरः-पंच महाव्रतानि समाधिः-ज्ञानादिकः, बहुलशब्दः पुनः पुनः करोत्यर्थः, एतानि ब्रह्मचर्यावस्थितः सर्वाण्येवाराधयति, तथा च यः गुप्तो मनोवाक्कायैः, तथा इन्द्रियैः ब्रह्मचर्ये च गुप्तः सदा अप्रमत्तो विहरेद्, सः अमूनि स्थानानि आराधयतीति । इदानीं शिष्यः पृच्छति-कतराणि तानि दश ब्रह्मचर्यस्थानानि०॥ (सूत्रं३-४२४) ॥ आचार्यो निर्वचनं करोति-अमूनि तानि, वक्ष्यमाणानि, तंजहा-'नो इत्थीपसु-पंडग' इत्यादि, 'न' इति प्रतिषेधे, स्त्रियः प्रसिद्धाः, पशवः गावीमाहिषीअश्वगर्दभादि, पण्डका-नपुंसकाः, संसक्तानि-आकीर्णानि तैः, शयनानि स्थानानि च, एतानि न सेवते यः स निर्ग्रन्थो भवति, 'तं कथ'मित्यादि, तत्कथमिति चेत्(कथं) एतानि स्थानानि सेवमानो न निर्ग्रन्थो भवति ?, उच्यते-एतानि स्थानानि सेवमानस्य ब्रह्मचर्ये शंका भवति, सेवामि न सेवामीति शङ्कामानं,

कांक्षा कतमां सेवामीति, किं दिव्या मानुष्याः तिरिश्चीर्वा कांक्षामात्रं, विचिकित्सा मतिविप्लुतिः धर्मज्ञस्य, किं जायते सेवमानस्य?, कर्म बध्यते, असेवमानस्य न बध्यते, ईदृशी विचिकित्सा समुत्पद्यते, भेदं संयमाद्भवेत्, चारित्रखण्डनमित्यर्थः, उन्मादं वाऽऽप्नुयात्, ग्रहगृहीत एव भवेत्, केवलिपन्नत्ताओ वा धर्माद् भ्रस्येत, धर्मो द्विविधः-श्रुतधर्मश्चारित्रधर्मश्च, अस्माद् द्विविधादपि धर्माद् भ्रस्यते, तस्माद्विदेत् दोषजालं, ज्ञात्वा-णो इत्थीपसुपंडगसंसत्ताइं सयणासणाइं सेविता भवति से णिग्गंथे, अयमुपनयः॥ तहा-'नो इत्थीणं कहं कहित्ता भवइ से निग्गंथे भवति०'। (सूत्रं ४-४२५)। यः स्त्रीणां कथामपि न कथयति, सा च इत्थीणं कथा चतुर्विधा भवति, तंजहा-जातिकहा कुल० रूव० णेवत्थकहा, जातिकहा बंभणी खत्तिणी सोभणा असोभणा वा, कुलकथा उग्गादि दमिला मरहट्ठिका, णेवत्थं जं जंमि देसे सोभणं वा असोभणं वा तं कहयति, तत्कथमिति चेत् यतः तै सार्द्धं निवसतः शयनासनस्थानानि सेविनः दोषजालं भवति। तथा कथामपि तथा कथयति तदेव दोषजालं सविशेषतरं भवति, तस्मात् कथापि स्त्रीणां न कथनीया इति। 'नो इत्थीहिं सद्धिं संनिसिज्जागए विहरेत्ता भवति०' (सूत्रं ५)॥ यः स्त्रीभिः सार्द्धं निसिज्जागतो न तिष्ठति, तत्कथमिति चेत्? यथा कथां कुर्वतः दोषजालं भवति तथा नैषद्यागतस्यापि, तस्मात् निषद्यागतेनापि स्त्रीभिः सार्द्धं न स्थातव्यमिति। इन्द्रियाण्यपि न निरीक्षितव्यानि तासां, कस्मात्?, दोषजालभयात्, 'एवं नो इत्थीणं०'॥(सूत्रं७-४२६॥) कुड्डंतरे वा कुंचिदादिसद्दं सुणेत्ता(न)भवति स निर्ग्रन्थो, पक्केटकादि कुड्यं, केतुगादि भित्ती, वस्त्रादि दुष्यं, कुपितशब्दं रत इत्यर्थः, शेषशब्दा गतार्थाः, एवमादयः शब्दाः स्त्रीणां न श्रोतव्याः, पूर्वोक्तदोषजालभयात्, एवं पूर्वरतक्रीडितानि न स्मर्तव्यानि, पूर्वदोषजालभयात्, एवं नो इत्थीणं कुड्डंतरे ठातितव्यं, पूर्वोक्तदोषजालभयादेव, एवं प्रणीतं रसभोजनं न भक्षयेत्, दोषजालभयात्, प्रणीतं-

गलत्स्नेहं तैलघृतादिभिः। तथा अतिमात्रं यावत् आहारो नाभ्यवहरणीयः, अतिमात्राया अप्रणीतस्य कस्मादभ्यवहरणं न क्रियते ?, उच्यते-पूर्वोक्तदोषजालभयादेव, तथा विभूषापि शरीरवस्त्रादिषु न करणीया, किमिति ?, विभूषितशरीरः स्त्रीणां अभिलषणीया भवंति ततस्तदेव दोषजालमाप्नोति। तथा-शब्दरूपरसगन्धस्पर्शेषु यः सक्तिं न करोति स निर्ग्रन्थो भवति, कथमिति चेत् ?, उच्यते-शब्दादिषु प्रसक्तस्य तदेव पूर्वोक्तं दोषजालमापद्यते। इदानीं एतदेवार्थः श्लोकैः प्रदर्शयति ॥ नयाः पूर्ववत् ॥ उक्तं बंभचेरसमाहिठाणं षोडशमध्ययनमिति ॥

इदाणिं सप्तदशं, तस्य कोऽभिसम्बन्धः ?, सम्बन्धो वक्तव्यः, स च सम्बन्धः त्रिविधः, तद्यथा-'छत्रप्रकरणाध्यायः' इत्यादि, छत्रप्रकरणसम्बन्धौ उक्तौ, अध्यायसम्बन्धः षोडशमे दश ब्रह्मस्थानानि वर्णितानि तैः सम्प्रयुक्तः सुश्रमणो भवति, एवं श्रमणेन कर्त्तव्यमिति, अनेन सम्बन्धेनायातस्यास्याध्ययनस्यानुयोगद्वारचतुष्टयं पूर्ववद् व्यावर्ण्यते, नामनिष्फण्णे निक्षेपे पावसमणिज्जंति पापशब्दो निक्षेप्तव्यः, श्रमणशब्दश्च, 'पावे छक्क' मित्यादि(३८९-४३१) पापशब्दस्य षट्को निक्षेपः, नामादि, नामस्थापने पूर्ववत्, द्रव्यपापं आगमनोआगमाभ्यां, आगमतः पापपदार्थज्ञः अनुपयुक्तः, नोआगमतः ज्ञशरीरभव्यशरीरव्यतिरिक्तः सचित्तादि, सचित्तं द्विपदादि, द्विपदानां पापमनुष्यादि, पापः पापसमाचारः, अशोभनसमाचार इत्यर्थः, एवं सर्वत्र पापं अशोभनमभिधीयते, चतुष्पदानां शृगालादि, अपदानां विषवृक्षकिंपाकफलादि, अचित्तानि एतान्येव जीवरहितानि, मिश्राणि एषामेव भागो जीवसहितः भागो जीवरहितमिति, क्षेत्रपापं नरकानि, यस्मिन् वा क्षेत्रे नरकादिकं वर्ण्यते, कालपापं अतिदुःषमादि, यस्मिन् वा काले पापं वर्ण्यते। 'भावे पावं इणमो०' ॥ ३८७-४३२ ॥ इत्यादि, भावपापं इमं प्राणातिपातः मृषावादः अदत्तादानं

अनत्र परिग्रहः, क्रियते, तानि च शब्दादीनि पापस्थानानि अभिधीयंते, कारणे कार्योपचारः, तैः पापं बध्यते इति, ततस्तानि पापस्थानानि अभिधीयंते, यानि च सूत्रोक्तानीति, इदानीं श्रमणशब्दः—'समणे चउक्कनिक्खेवो०' ॥ ३८८-४३२ ॥ इत्यादि, तस्य चतुष्को निक्षेपः, नामादि, नामस्थापने पूर्ववत्, द्रव्यश्रमणः निह्नवादि, भावश्रमणो ज्ञानी चरित्रयुक्तश्च, 'जे भावा०' ॥ ३८९-४३३ ॥ इत्यादि, 'एयाइं पावाइं०' ॥ ३९१-४३६ ॥ इत्यादि, एतद्गाथाद्वयं गतार्थं, ये भावाश्चाशोभना इहाध्ययने वर्णिताः तान् सेवमानो पापश्रमणोऽभिधीयते, उक्तो नामनिष्पन्नो निक्षेपः । इदानीं सूत्रालापकस्य विषयो, यस्माद् यावत् सूत्रानुगमे सूत्रमुच्चारणीयं, एतत् पूर्ववद् द्रष्टव्यं, सूत्रं चेदं-'जे केइ उ (मे) पव्वइए०' ॥ ५२७-४३६ ॥ इत्यादि, यः कश्चित् प्रव्रजितः अनिर्दिष्टस्वरूपः तस्येदं विशेषणं, निर्ग्रन्थो बाह्याभ्यन्तरग्रन्थविप्रमुक्तः, बाह्यो ग्रन्थः द्विपदचतुष्पदहिरण्यसुवर्णादिकः, अभ्यन्तरः क्रोधादि, श्रमणधर्मं श्रुत्वा 'विनयोपपन्नो' ज्ञानदर्शनचारित्रउपचारविनयसम्पन्नो इत्यर्थः, 'सुदुल्लभं लभेज्जा ( लहिउं ) बोधिलाभं' संवेगवैराग्यसंपन्नः संयमं प्रति यतितुमारब्धः, स एवंगुणविशिष्टोऽपि भूत्वा चारित्रावरणीयकर्मोदयात् सीदितुमारब्धः यथासुखं विहरति, तत्र चोदितः-किं स्वाध्यायादि न करोति ?, पश्चात् सीदतां यानि वचनानि तान्यसौ वक्तुमारब्धः 'सिज्जा दढा०' ॥५२८-४३६॥ इत्यादि, शय्या-वसतिः, सा च मे दृढा निरूप्यते, तथा निरसं पारणानि च ग्रियन्ते, अशनादि च लभ्यते, न कश्चिदविद्यो विद्यते, न च बहुश्रुतबाल्यश्रुतयोः कश्चिद्विशेषः, ततः किं मम गलतालुविशोषणेन, निर्धर्मवचनमेतत्, पापश्रमणोऽपि स एव अभिधीयते, एतानि च पापानि कुर्वन् पापश्रमणोऽभिधीयते । 'जे केइ उ' ॥५२९-४३७॥ इत्यादि, 'निद्राशील' निद्रात्मभावः, निद्रां प्रकामशः सेवते, भुक्त्वा पीत्वा च निरपेक्षं स्वपिति, न स्वा-

ध्यायादि करोति, असौ निद्राप्रमादे वर्त्तमानः पापश्रमणो भवति।'आयरिय०'॥५३०-४३६॥इत्यादि, श्रुतं विनयं च यैः शिक्षापितः तानेव खिंसति-परिभवति बालः-अज्ञः,असावपि पापो भवतीति।'आयरिय०'॥५३१-४३६॥इत्यादि, तथा आचार्योपाध्यायानां सम्यक् प्रतिपत्तिं न करोति, यश्च न सम्यक् प्रतिपूजयति, स्तब्धश्च भवति,असौ पापो भवति'संमद्दमाणे०'॥५३२-४३६॥ इत्यादि, तथा जीवेषु च यः निरपेक्षः सन् संमर्दयन् अणाउत्तो गच्छति, पाणिग्रहणाद् द्वीन्द्रियादयः त्रसाः परिगृहीताः, बीजहरितग्रहणात् स्थावराः, यश्च असंयतः संयत इति आत्मानं मन्यते असावपि पापो भवति। 'संथारं०'॥५३३-४३६॥ इत्यादि, संथारे यत्र सुप्यते, फलगं शयनं उपविशनं वा, पीढं उपविशनमेव, निषद्या पायकंबलादि वा,एतत् सर्वं अपमज्जित्ता आरुभती,तथा ग्रहण स्थापनं अपमज्जित्ता यः करोति स पापो भवति।'दवदवस्स०'॥५३४ ४३६॥इत्यादि,निष्कारणमेव त्वरितगामी, युगान्तरलोकी उपयुक्तश्च न भवतीत्यर्थः, तथा प्रमत्तश्च अन्यतरेण प्रमादेन पुनः पुनर्भवति, उल्लंघन पातनमन्यतरस्य सत्वविशेषस्य रोषाविष्ट' करोति, चंडो-रोषणः, नित्यं रोषणशीलश्च यः स पापो भवति।'पडिलेहेइ०'॥५३५-४३६॥इत्यादि, तथा प्रतिलेखनां च यः करोति प्रमत्त', अन्यतरेण प्रमादेन, पादकंबलादि च न प्रतिलेखयति, तदपि दोषदुष्टं अणाधुत्तं प्रतिलेखयति यः स पापो भवति। 'पडिलेहेइ०' ॥५३६॥ इत्यादि, तथा प्रतिलेखयति प्रमत्तः, किंचिन्मनोहरकलरिभितादि शब्दं श्रुत्वा गुरुणा णोदितः अज्जो! न वट्टति, ततस्तमेव गुरुं परिभवति यः स पापो भवति।'बहुमाई०' ॥५३७ ४३६॥इत्यादि, बहुमायी सर्वत्र प्रयोजनेषु मायया व्यवहरति, न शुद्धहृदयः, प्रकर्षेण मुखेन अरिमावहतीति मुखरी, तादृशं भाषते येन सर्वे एव अरिर्भवति, तथा स्तब्धः लुब्धश्च, यथा मायया क्रोधेन मानेन लोभेन च न क्वचित् किंचित्करोति निग्रहं, एतदुक्तं भवति-सर्वमेव प्राणातिपातादि करोती-

त्यर्थः, न क्वचित् विवेको विरतिर्वा विद्यते, न च संविभागशीलः, एतद्दोषदुष्टत्वात् न कस्यचित् प्रियः, असौ पापो भवति। 'विवादं च०'॥५३८-४३६॥इत्यादि, खामितविउसिताइं अधिकरणाइं उदीरेति, अन्येषामुपशान्तानामिति विग्रहः,उदीरयति, अधर्मशीलत्वात्, अदुवा-अथवा स्वपक्षं परपक्षं वा हंति, व्युद्ग्रहे कलहे वा युक्तः-आयुक्तः, विग्रहः सामान्येन कलहो वाचिकः, यः एवंप्रकारः असौ पापो भवति'अथिरासणे०'॥५३९-४३६॥ इत्यादि, स्थिरासनो न भवति, निष्कारणमेव इतश्चेतश्च बंभ्रमीति, 'कुच परिस्पन्दने' तास्ताः क्रियाः करोति येन परस्य मोहमुत्पादयति, सुदुसुदवीए ण निसीएज्जा त्ति एतन्न स्मरति, आसनोपविष्टेनोपयुक्तेन भवितव्यं, तच्च तथा न करोति यः स पापो भवति।'ससरक्ख०'॥५४०-४३६॥इत्यादि, स्वपन् पादौ न प्रमार्जयति,संथारउत्तरपादौ(पट्टौ)न प्रतिलेखयति,संस्तारके च तिष्ठन् उपयुक्तो न भवति,सर्वत्र च तिष्ठता गच्छता च उपयुक्तेन भवितव्यं, एवं न करोति असौ पापो भवति।'दुद्धदही०' ॥५४१-४३६॥ इत्यादि, विकृतिं-अशोभनं गतिं नयन्तीति विगतयः, ताश्च क्षीरविगत्यादयः, विगतीमाहारयतः मोहोद्भवो भवति, न च कथंचिदपि अनशनादि तपः करोति असौ पापो भवति। 'अत्थंतमिग०' ॥५४२-४३६॥इत्यादि, अस्तमनकालेऽपि आहारं नित्यमाहारयति, यदि नाम कश्चिच्चोदयति किमिति भवं आहारं नित्यमाहारयति न चतुर्थषष्ठादि कदाचिदपि करोति ?, एवं चोदितः प्रतिचोदयति यः स पापो भवति। 'आयरिय०' ॥५४३-४३६॥ इत्यादि, आचार्यपरित्यागी परपापंडसेवकः 'गाणंगणिए' गणा गणं संचरति जघन्येन अपूर्णषण्मासे निष्कारणे असौ गाणंगणिकोऽभिधीयते,'दुब्भूते' दुष्टा(दुष्टं)र्थौ, दुष्टं-अशोभनं भवनं यस्य, भवनं वर्त्तनं करणमित्यर्थः, यः एवंप्रकारः स पापो भवति। 'सयं गेहं०' ॥५४४-४३६॥ इत्यादि, स्वयं गृहं परित्यज्य प्रव्रज्यां गृहीत्वा परगृहेषु व्यापारं करोति, निमित्तादीनां च व्यापारं

करोति, एवं संयमं प्रति सीदन् पापो भवति 'सनाइपिंडं०'॥५४५-४३६॥ इत्यादि, सन्नायपिंडं जेमेइ जिह्वेन्द्रियासक्तः, सुखासक्तश्च समुदानं भिक्षापर्यटनं नेच्छति, एतच्च एतद्द्वयमपि न भवति, तथा गृहस्थासनानि नित्यं सेवति यः असौ पापो भवति 'एयारिसे०॥ ५४६।५४७-४३७ ॥ इत्यादि, वृत्तद्वयं, ईदृशः 'पंच कुसीलसंवृत्तः' पंच इति पासत्थोसण्णकुसीलणितियसंसत्तरूवधरा इत्यर्थः, मुनीनां प्रवराणां हिट्ठिमो निकृष्टो जघन्य इत्यर्थः, एवंप्रकारस्य आत्मा साधुलोके विषमिव गर्हितो भवति, नासौ इहलोके पूज्यः, नापि परलोके, यः पुनरेतान् दोषान् वर्जयति यदा स सुव्रतो भवति मुनीनां मध्ये, तस्यात्मा साधुलोके अमृतमिव पूज्यते, अमृतं कियद्वर्णगन्धरसोपेतं वर्णबलपुष्टिसौभाग्यजननं सर्वरोगनाशनं अनेकगुणसम्पन्नं कल्पवृक्षफलवदमृतमभिधीयते, स एवंत्थविशिष्ट इहलोकं परलोकं च आराधयतीति । इति परिसमाप्तौ उपप्रदर्शने च, गुरूपदेशात्, न स्वाभिप्रायेणेति । नयाः पूर्ववत् ॥ इति पापसमणं नाम सप्तदशमध्ययनमिति १७ ॥

उक्तं सप्तदशमध्ययनं, इदानीमष्टादशं, तस्य कोऽभिसम्बन्धः ?, सम्बन्धो वक्तव्यः, स च त्रिविधः, तद्यथा—'सूत्रप्रकरणाध्याय' इत्यादि, सूत्रप्रकरणसम्बन्धौ उक्तौ, अध्यायसम्बन्धः सप्तदशमे पापश्रमणो व्यावर्णितः, इह पुनरष्टादशमे सुश्रमणो व्यावर्ण्यते, अनेन सम्बन्धेनायातस्यास्य अध्ययनस्यानुयोगद्वारचतुष्टयं पूर्ववद् व्यावर्ण्य नामनिष्फन्ने निक्खेवे संजईज्जं, 'निक्खेवो संजइज्जंमि०' ॥३९१-४३८॥ इत्यादि, संजयशब्दस्य चतुर्विधो निक्षेपः नामादि, यावत् ज्ञशरीरभव्यशरीरव्यतिरिक्तः त्रिविधः, एकभविकादि, भावसंजओ आगमतो नोआगमतो य, 'संजयनामं गोयं वेयंतो०' ॥३९२-४३८॥ इत्यादि, उक्तो नामनिष्पन्नो निक्षेपः । इदानीं सूत्रालापक इति, अस्मात्तावज्ज्ञेयं यावत् सूत्रं—'कंपिल्ले नयरे०' ॥५४८॥ इत्यादि, निर्युक्तिगाथाः सूत्रगाथाश्च

प्रायसः प्रकटार्था एव, निर्युक्तिकारः यथोक्तमेवार्थं क्वचिदनुवर्त्तते, अतः परं गाथानुसारेण प्रवेशः आख्यातकप्राय प्रायः भविष्यति, सो य संजओ राया कहिं आसी ?, कहिं वा तेण साहुत्तणं लद्धं ?, तं भणति-'कंपिल्लपुर०' ॥३९४-४३८॥ इत्यादि, कंपिल्लपुर नयर, तत्थ य संजतो नाम राया, सो कइया मिगवहाए णिग्गतो चउव्विहेणं सेन्नेणं हयेहिं गएहिं रहेहिं पुरिसेहि य, तदेव चउव्विहं सेन्नं नासीरं भवइ, तस्स य कंपिल्लपुरवरस्स समीवे केसर नाम उज्जाणं, पणपडियकडच्छायं, तेण राइणा ते मिगा समंततो परुद्धा संता केसरुज्जाणं पविट्ठा, अप्फोयमंडवे गद्दभालीणामं अणगारो झाणं झियायमाणो चिट्ठति, 'अप्फोव०' ॥५५२-४३९॥ इति, निमुक्तं भवति-आकीर्णः, वृक्षगच्छगुल्मलतासंछण्णे इत्यर्थः, सो य राया गच्छगते मिगे वधेति, तेसिं च मिगाणं कति मिगा भीता तेसिं सरणमिव मग्गमाणा उपगता, तेण राइणो अच्छरीयमिति चिंता जाता-किं मण्णे इत्थ कोइ होज्जा ?, ततो राया आसगतो ते मिगे हए अहए य पासति, तं च साधुं दट्ठूण संभंतो भीतो भणति-अहो मया मन्दपुण्णेणं मन्नेऽनगारो विधितोऽतिरसगिद्धेण 'घत्तुणा' घातणसीलेनेत्यर्थः, सो राया, 'आसं विसज्जइत्ताणं०' ॥५५५-४४०॥ तं साहुं विणएणं वंदिऊण अवराहं तं तु खामेति राया, ण जाणिया तुब्भे तो सरो पत्तितो मया, 'अह मोणेण०' अह मोणमस्सितो सो अणगारो ण वाहरति तस्स, तब्भयभीतो इणमत्थं सो उदाहरति-'कंपिल्लपुराहिवई०' ॥ ४०० ४४० ॥ इत्यादि, सर्वा निर्युक्तिगाथाः प्रकटार्थाः, सूत्रगाथा अपि प्रायसः प्रकटार्था एव, यद्वक्तव्यं तदुच्यते ततो सो संजओ राया गद्दभालिस्स अंतिए चेच्चा रज्जं पव्वइतो, ग्रामसमुदायो राष्ट्रमभिधीयते, सो तं पव्वइत सोऊण तत्थ खत्तिओ देवलोयचुतो सारिसतो वीमंसाए पुच्छति-जहा ते दिस्सती रूवं, पसन्नं ते जहा

मणो ॥ किंनामे किंगोत्ते, कस्सट्ठाए व माहणे? । कहं पडियरसी बुद्धे?, कहं विणीयत्ति वुच्चसि? ॥ ५६८-४४३ ॥ उच्यते-संजओ नाम नामेणं, अहं (तहा) गोत्तेण गोयमो । गद्दभाली ममायरिया, विज्जाचरणपारगा ॥ ५६९,४४२ ॥ जम्हा सव्वे पाणिणो ण हंमि तम्हा माहणेत्ति वुच्चामि, तथा पुनरपि क्षत्रिय आह-क्रियावादिनं आसीतं शतं अक्रियावादिनां चतुरशीतिः अज्ञानिकवादीनां सप्तषष्टि वैनयिकानां द्वात्रिंशत्, एभिश्चतुर्भिः स्थानैः एकान्तवादिनः 'मितज्ञा' मितज्ञानिनः मितशीलमुपचारः, मितं परिमितं स्तोकमित्यर्थः, ज्ञानिनः, कथं एवमेते परमार्थं ज्ञास्यन्ते?, कथं वा परस्योपदेशं दास्यंति?, अज्ञानाच्च पापं कुर्वन्ति, ततो पडंति णरए घोरे, पुनर्धर्ममाचरन्ति ते दिव्वां गतिं गच्छन्ति, सव्वे ते विदिता मज्झ इत्यादि गतार्था, पुनरपि क्षत्रिय आह-अहमासी महालोके कल्पे महाप्राणे विमाणे द्युतिमां वरिससतोवमा, किमुक्तं भवति?-पल्योपमसागरोपमैर्यत्रोपक्रमः क्रियते आयुए, पाली मर्यादा, या पल्योपमैः स्थितिः सा ।ली, या पुनः सागरोपमैः स्थितिः सा महापाली, सोऽहं बहूनि सागरोपमानि ब्रह्मलोककल्पे भोगान् भुक्त्वा इदं मानुष्यकं भवमायातः, इहापि मम ज्ञानमस्ति येनात्मनः परेषां च आयुं जाणामि, तंजहा- स एव क्षत्रियः संजयस्योपदेशं ददाति, नानाप्रकारां रुचिं च छंदं च परिवर्ज्य संजतो भवति जिनमते, एकगाचित्तो भव इत्यर्थः, ये च अनर्थास्तां सर्वां ज्ञात्वा परिवर्जयेत्, ये च साधिकरणप्रश्नाश्च तेषां प्रतिक्रमे, अहो विस्मये, अहो भवां संयमे उत्थितः, अहोरात्रं सर्वमित्यर्थः, एतज्ज्ञात्वा तपः कुरु, यच्च मां पृच्छसि तत् तं कथयामि, क्रिया आस्तित्वं तत्र रुचिं कुरु, कथं?, अस्ति माताऽस्ति पिता अस्ति सुकृतदुष्कृतानां कर्मणां फलविपाक इति, नास्तित्वं च परिवर्ज्य, सम्यग्दृष्टिर्भूत्वा धर्ममाचर, एतत्पुण्यपदं श्रुत्वा कृत्वा च ये मोक्षं गता तानहं कीर्त्तयिष्यामि स्थिरीकरणार्थं, भरहोवि भरहवासं चेच्चा कामाणि पव्वइए इत्यादि, एवं-

मादाय धीरा धर्म्मं कृत्वा मोक्षं गताः, ये पुनरहेतुभिर्वर्त्तन्ते उन्मत्तका इव विचरन्ति, एतत् शुभाशुभं विशेषं गृहीत्वा ये धीरा बुद्धिमंतो दृढपराक्रमाः ते शुभं प्रति प्रयतंते, ये पुनरन्ये ते विपरीतं कुर्वन्ति, एतज्ज्ञात्वा मया अणिदाणखमाचि—अनिदाणमबन्धस्तत्क्षमा तत्समर्थास्तन्निष्पादका, यद्वा अबन्धात्मिका सत्यभाषाभाषिता, एतत् कुर्वतः त्रिष्वपि कालेषु परमां गतिं गताः, ये पुनरहेतुभिः वर्त्तन्ते ते कथं शुभां गतिं यास्यन्तीति, शेषं तदेव, नयाः पूर्ववत्॥ संजइज्जं अष्टादशमध्ययनं परिसमाप्तमिति १८॥

उक्तं अष्टादशम्, इदानीमिकोनविंशतितमम्, अत्र सम्बन्धः, अष्टादशमे भोगऋद्धिपरित्यागात् सुश्रमणो भवति, इहापि अप्रतिकर्म्मशरीरत्वात् सुतरां श्रमणो भवति, अनेन सम्बन्धेनायातस्याध्ययनस्यानुयोगद्वारचतुष्टयं पूर्ववद् व्यावर्ण्य नामनिष्पन्ने निक्षेपे मियापुत्तिज्जं, मृगशब्दः पुत्रशब्दश्च निक्षेप्तव्यः, 'णिक्खेवो अ मिआए०'॥४०५-४५१॥ इत्यादि गाथात्रयं गतार्थं। इदानीं नामनिरुक्तिं ब्रवीति-'मिगदेवीपुत्ताओ०'॥४०८-४५१॥ इत्यादि, गतार्था, उक्तो नामनिष्पन्नो निक्षेपः। इदानीं सूत्रालापक इति, अस्माचावद्वक्तव्यं यावत्सूत्रं निपतितं, सूत्रं चेदं—'सुग्गीवे णयरे०' ॥६०१-४५२॥ इत्यादि, सूत्रोक्तमप्यर्थं निर्युक्तिकारः पुनरपि ब्रवीति, किं?, द्विर्बद्धं सु(सुब)द्धं भवतीति, ' 'सुग्गीवे णगरे' इत्यादि आख्यानकगाथाः प्रायसः गतार्था, 'उण्णंदमाण' इति 'दुनदि समृद्धौ' हृदयेन तुष्टिबहुमानो भोगसमृद्धः सः तुल्यो नान्य इति, दोगुंदक इति त्रायस्त्रिंशदेवा नित्यं भोगपरायणा ते दोगुंदगा इति भण्यन्ते, एवं सोऽपि नित्यं भोगपरायण इति दोगुंदगः, देहति-पश्यति, संनिणाणमिति संज्ञिनः ज्ञानं संज्ञिज्ञानं तत्समुत्पन्नं, जातिस्मरणमित्यर्थः, तेन जाइस्मरणेन स्मरति यथा मया अन्यस्मिन् जन्मनि संयमः कृत इति, पच्छा पुरा व जहि-

यव्वो, पर्यन्तकालो पुरा लघुवयस एव, यद्वा युष्माकं पश्चात्पुत्तो वा, परित्यज्य, शेषं तावदेव जायते इति, नयाः पूर्ववत् ॥ एकोनविंशतितमं मृगापुत्रीयं समाप्तम् ॥ १९

इदाणिं विंशतितमं, तस्य कोऽभिसम्बन्धः ?, एकोनविंशतितमे अप्रतिकर्म्मशरीरता व्यावर्णिता, विंशतितमे महानिर्ग्रन्थत्वमिति व्यावर्ण्यते, अप्रतिकर्म्मशरीरश्च महानिर्ग्रन्थो भवतीत्यनेन सम्बन्धेनायातस्यास्य अध्ययनस्यानुयोगद्वारचतुष्टयं पूर्ववद्व्यावर्ण्य नामनिष्पन्ने निक्षेपे महानियंठिज्जं, खुड्डगणियंठिज्जं भण्णति, क्षुल्लके अज्ञाते नो महान्तं ज्ञायते ततो क्षुल्लकज्ञापनार्थं 'नामं ठवणा०'॥४२२ ४६६॥इत्यादि, नामक्षुल्लकं क्षुल्लक इति यस्य नाम, स्थापनाक्षुल्लकः असद्भावे अक्षादि, सद्भावे काष्ठकर्म्मादिक्षुल्लकस्थापना, द्रव्यक्षुल्लकं ज्ञशरीरभव्यशरीरव्यतिरिक्तं सचित्तादि, सचित्तं प्रथमसमयोत्पन्नं सूक्ष्मपनकजीवशरीरं, अचित्तं परमाणु, मिश्रं तस्य पनकशरीरस्य परित्यागकाले केचित् सचित्ताः केचिदचित्ताः शरीरप्रदेशाः, क्षेत्रे क्षुल्लकं आकाशप्रदेशः, यस्मिन् वा क्षेत्रे क्षुल्लकं व्यावर्ण्यते, योगः व्यापारः, स च शैलेश्यवस्थायां क्षुल्लको भवति, भावानामौपशमिक एव क्षुल्लकः, सर्वस्तोक इत्यर्थः, एतेसिं क्षुल्लकानां प्रतिपक्षे महंतगा होंति, महंतशब्दोऽपि व्याख्यात एव। इदानीं नियंठशब्दस्य निक्षेपः-'निक्खेवो नियंठंमि०'॥४२३-४६६॥इत्यादि, गाथाद्वयं गतार्थं, भावनिर्ग्रन्थः पंचविधः-पुलाकः बकुशः कुशीलः निर्ग्रन्थः स्नातको, निर्ग्रन्थः स च पंचविधः एभिर्वक्ष्यमाणैः द्रव्यैरनुगन्तव्यः, तानि चामूनि-'पण्णवण वेय रागे' इत्यादि गाथात्रयसङ्गृहीतानि ॥ ४२५ ।४२६।४२७-४७१। प्रज्ञापना-एषां पुलाकादीनां स्वरूपकथनं, पुलाको पंचविहो पण्णत्तो, तंजहा-णाणपुलाए दंसणपुलाए चरित्रपुलाए लिङ्गपुलाए अहासुहुमपुलाए णाम पंचमो, तत्थ णाणपुलाओ ज्ञानस्य विराधनां करोति, कथं ?,

कालविनयबहुमानादीनि न सम्यक्करोति, तथा ज्ञानस्य ज्ञानिनां च निन्दाप्रद्वेषमत्सरादीनि करोति, एवं ज्ञानं पुलाकीकरोति, निस्सारीकरोतीत्यर्थः, एवं सर्वत्र, दर्शनपुलाए शंकादिदोषसहितं दर्शनं धारयति, गुणाश्चोपबृंहणादयः, नात्र सम्यक्करोति, तथा दर्शनिनां च निन्दाप्रद्वेषमत्सरादीनि करोति, एवं दर्शनं पुलाकीकरोति, चरित्तपुलाओ चारित्रस्य देहे देशस्य खण्डनं सर्वखंडणं वा करोति, तथा चारित्रस्य चारित्राणां च निन्दाप्रद्वेषमत्सरादीनि करोति, एवं चारित्रं पुलाकीकरोति, लिंगपुलाओ लिंगं-रजोहरणमुखवस्त्रिकाणि तं अविधीए अणादरेण वा धारयंति, निन्दाप्रद्वेषमत्सरादीनि(वा)करोति, एवं दर्शनं पुलाकीकरोति-निस्सारीकरोति, अहासुहुमताए एषां चतुर्णामपि सूक्ष्मान् अतिचारान् करोति, एवं पुलाकी व्याख्यातः। बउसे पंचविहे पण्णत्ते, तंजहा-आभोगबउसे अणाभोगबउसे संवुडबउसे असंवुडबउसे अहासुहुमबउसे णाम पंचमे, बकुस इति किमुक्तं भवति?-रागेण सरीरोपकरणादिषु विभूषां करोति, शरीरे देशस्नानं सर्वस्नानं वा करोति, केशादिषु संयमनं वा करोति, शरीरस्य वर्णरूपगन्धादि वा करोति, तथा आभोगेन ज्ञानं करोति आभोगबकुशः, अनाभोगेन अजानन्-अज्ञानीभूत्वा करोति अनाभोगबकुशः, संवृत्तः सन् करोति, चारित्रावरणीयकर्मोदयात्, असंवृतबकुशः, असंवृतो वा करोति असायसंवृतबकुशः, अथाप्य(यथा)सुहुमं वा यत्किंचित्तावन्मात्रंकरोति, एवं उपकरणवसत्यादिषु करोति। कुसीले दुविहे पण्णत्ते, तंजहा-पडिसेवणकुसीले कसायकुसीले य, पडिसेवणकुसीले जहा पुलाए, नवरं कुशीलशब्दोच्चारणं कर्त्तव्यं, कुत्सितं शीलं कुशीलं मूलोत्तरगुणेषु, कषायकुशीले पंचविधे चेव जहा पुलाए, नवरं कषायशब्दोच्चारणं कर्त्तव्यं, कषायानुगतं शीलं। नियंठे पंचविहे पण्णत्ते, तंजहा-पढमसमयनियंठे अपढमसमयनियंठे चरमसमयनियंठे अचरमसमयनियंठे आहासुहुमणियंठे णामं पंचमं, निर्गतग्रन्थो निर्ग्रन्थः, कर्म्माष्टविधं मिथ्यात्वाविरति दुष्टयोगाश्च,

पुलाकादीनां प्ररूपणादीनि.

यद्वा ग्रन्थो बाह्योऽभ्यन्तरश्च, बाह्यः स्वजनधान्यधनकनकरजतादि, अभ्यन्तरः क्रोधादि, अस्माद् ग्रन्थान्निर्गतो निर्ग्रन्थः, असौ प्रथमसमयोत्पन्नः प्रथमसमयनिर्ग्रन्थोऽभिधीयते, आहासुहुमनियंठो निर्ग्रन्थत्वं यत्किंचित्तावन्मात्रेण वर्त्तते। सिणाते पंचविहे पण्णत्ते, तं० -अच्छवी असबले अकम्मंसो संसुद्धणाणदंसणधरे अरहा जिणे केवली अपरिस्सावी, छवि-सरीरं, नास्य छवि विद्यत इति अच्छवि, कथं?, यथा नास्य शरीरे मनागपि मूर्च्छा विद्यते, परित्यक्तशरीर इत्यर्थः, न चान्यशरीरप्रतिबन्धकः १, अशबलः शुभाशुभकर्मविप्रमुक्तः२, घातिकर्माणि प्रति नास्य स्तोकोऽपि कर्मबन्धो विद्यत इति अकर्मांशः, घातिकर्माण्येव प्रति३, संशुद्धज्ञानदर्शनधरः, क्षायिकज्ञानदर्शनधर इत्यर्थः४, देवासुरमनुजेभ्यः पूजामर्हतीति अरहा, क्रोधादिजयाज्जिनः, केवलं-सम्पूर्णं ज्ञानदर्शनं धारयतीति केवली, नास्य ज्ञानदर्शनगुणानि परिश्रवन्तीति अपरिश्रावी५। पुलाकादीनां स्वरूपकथनमुक्तम्, इदानीं तेषामेव पुलाकादीनां वेदचिंता–ते हि किं सवेदका अवेदका इति ?, वेदास्त्रयः- स्त्रीपुंनपुंसका इति, पुलाए सवेदए, णो अवेदए, जइ सवेदए किं थिवेदए पुरिसवेदए नपुंसवेदए ?, णो इत्थीवेदए, पुरुषवेदए वा णपुंसगवेदए वा होज्जा, बउसा पडिसेवगा तीहिंवि सवेदए होज्जा, कसायकुसीलए सवेदए अवेदए उवसन्तवेदए वा खीणवेदए वा होज्जा, सवेदए तीहिंपि वेदेहिं वा होज्जा, णियंठो सवेदए अवेदए होज्जा, जति अवेदए उवसंतवेदए वा खीणवेदए, जइ सवेदए तीहिंपि सवेदए, सिणायए अवेदए खीणवेदए होज्जा। पुलाकादयः सरागा वीतरागा इति प्रश्नः ?, पुलाए सरागो, ण वीतरागो होज्जा, एवं जाव कसायकुसीले, णियंठे णो सरागो होज्जा, वीतरागे होज्जा, उवसंतवीतरागे खीणवीतरागो वा होज्जा, सिणाते खीणवीतरागे णियंठे होज्जा। पुलाकादयः किं स्थितकल्पे अस्थितकल्पे भवन्तीति प्रश्ने, कः स्थितकल्पे ?, पुरिमपश्चिमानां तीर्थकराणां तीर्थेषु नियमात् क्रियते "अयं कल्पः

ततः स्थितकल्पोऽभिधीयते, शेषाणां अनियतः, स चायं-आचेलक्कुद्देसिय सज्जायर रायपिंड कितिकम्मा। वत जेट्ठ पडिक्कमणे मासं पज्जोसवणकल्पे ॥ १ ॥ कल्पशब्दश्च करणे वर्त्तते, यथोक्तं-"सामर्थ्ये वर्णनाकाले, छेदने करणे तथा। औपम्ये चाधिकारे (वासे) च, कल्पशब्दं विदुर्बुधाः ॥ १ ॥" पुलाकादयः सर्वेऽपि स्थितकल्पे अस्थितकल्पे वा भवंतीति, अथवा कल्पसामान्यात् पुलाए किं जिणकप्पे थेरकप्पे कप्पातीते वा होज्जा?, णो जिणकप्पे, णो कप्पातीए, थेरकप्पे होज्जा, बउसे पडिसेवणाकुसीले य जिणकप्पे थेरकप्पे वा होज्जा, णो कप्पातीते, कसायकुसीले तिहिवि होज्जा, णियंठे सिणातो कप्पतीते, पुलाए सामाईयसंजएण वा छेदोवट्ठावणियातो वा होज्जा, सेसेसु पडिसेधो, एवं बउसपडिसेवगावि, कसायकुसीलो आइल्लेसु चउसु संजमेसु होज्जा, णो अहक्खाए, णियंठासिणायगा णियमा अहक्खातसंजमे होज्जा। पुलाए किं पडिसेवए अपडिसेवए ?, णियमा पडिसेवते, जति पडिसेवए मूलगुणपडिसेवए उत्तरगुणपडिसेवए ?, मूलगुणेसु पंचण्हं महव्वयाणं अन्नयरं पडिसेविज्जा, उत्तरगुणेसु दसविहस्स पच्चक्खाणस्स अन्नतरं पडिसेविज्जा, बउसे उत्तरगुणपडिसेवए, नो मूलगुणपडिसेवए, पडिसेवणाकुसीले जहा पुलाए, उवरिल्ला तिण्णिवि अपडिसेवगा। पुलाए कतिहिं णाणेहिं होज्जा ?, दोहिं वा तीहिं वा, बउसपडिसेवगादि, एवं कसायकुसीले, णियंठया दोहिं वा तीहिं वा चउहिं वा होज्जा, पुलाओ न अपुव्वाइं अहिज्जेज्जा, बउसो जहण्णेणं अट्ठ पवयणमाताओ उक्कोसेणं दस पुव्वाइं अहिज्जेज्जा, एवं पडिसेवओऽवि, कसायकुसीलो णियंठो य जहण्णेण अट्ठ पवयणमाताओ उक्कोसेणं चोद्दस पुव्वाइं अहिज्जेज्जा, सिणातो सुयवतिरित्तो। पुलाओ तित्थे होज्जा, णो अतित्थे, एवं बउसपडिसेवगावि, कसायकुसीलो तित्थे वा अतित्थे वा होज्जा, जति अतित्थे तित्थकरो वा पत्तेयबुद्धो वा होज्जा, एवं नियंठासिणायावि। पुलाओ किं सलिंगे होज्जा अण्णेसिं लिंगे वा होज्जा ?,

दव्वलिंगं पडुच्च सलिंगे वा अन्नलिंगे वा होज्जा, भावलिंगं पडुच्च णियमा सलिंगे होज्जा, एवं जाव सिणातो। पुलातो कइहिं सरीरेहिं होज्जा?, तीहिं ओरालियातेयाकम्मएहिं, वउसपडिसेवगाणं वेउव्वियं अब्भहियं, कसायकुसीलो पंचहिं सरीरेहिं भयणाए, णियंठसिणाता जहा पुलाओ। पुलाओ किं कम्मभूमिए होज्जा० ?, जम्मणं संतिभावं पडुच्च कम्मभूमिए होज्जा, णो अकम्मभूमिए होज्जा, एवं सेसावि, साहरणं पडुच्च कम्मभूमीए वा होज्जा अकम्मभूमीए वा होज्जा, (पुलाओ कंमि काले होज्जा? जम्मणं संतिभावं च पडुच्च सुसमदूसमाए दूसमसुसमाए दूसमाए,) एवं सेसावि, साहरणं पडुच्च (छसुवि, जम्मेणं), सुसमदुस्समाए दूसमसुसमाए दूसमाए तिसुवि कालेसु होज्जा, उस्सप्पिणीए जम्मणं पडुच्च दुस्समसुसमाए सुसमदुस्समाए य दोसु कालेसु होज्जा, महाविदेहे चतुर्थप्रतिभागे सर्वकालमेव भवेज्जा, संतिभावं पडुच्च पढमदुगं छट्ठो य कालो य पडिसिज्झति, सेसेसु होज्जा, जम्मणं जंमि काले जन्मोत्पत्तिः, संतिभावो यस्मिन् काले विद्यमानत्वं, एवं वउसकुसीलनियंठसिणायावि साहारणं पडुच्च अन्नत्थ होज्जा, णवरं णियंठसिणाताण साहरणं णत्थि। पुलाए कालगते समाणे कहिं उववज्जेज्जा ?, जहण्णेणं सोहम्मे कप्पे, उक्कोसेणं सहस्सारे, बउसपडिसेवगाणं जहण्णेणं तं चेव, उक्कोसेणं अच्चुते कप्पे, कसायकुसीले जहण्णेणं तं चेव, उक्कोसेणं अच्चुते कप्पे, कसायकुसीले जहण्णेणं तं चेव, उक्कोसेणं अणुत्तरोववाइएसु, नियंठस्स सव्वाए, पडिसेवित्ता अहमिंदत्ताए उववज्जेज्जा, सिणातो सिद्धिगतीए उववज्जेज्जा, पुलाए देवेसु उववज्जेज्जा, पुलाए देवेसु उववज्जमाणे किं इंदत्ताए सामाणियत्ताए तायत्तीसत्ताए लोकपालत्ताए अहमिंदत्ताए उववज्जेज्जा ?, अविराधणं पडुच्च एतेसु सव्वेसु उववज्जेज्जा अहमिंदवज्जं, विराहणं पडुच्च अण्णतरेसु उववज्जेज्जा, एवं वउसपडिसेवगावि, कसायकुसीले अहमिंदत्ताए उववज्जेज्जा, णियंठे अजहण्णमणुक्कोसेणं

पुलकादि-स्वरूपं.

सव्वट्ठसिद्धे उववज्जेज्जा, एवं बउसपडिसेवगादि। पुलागस्स देवलोगट्ठिती जहण्णेणं पलिओवमपुहुत्तं, उक्कोसेणं अट्ठारससागरोवमाइं, बउसपडिसेवगाणं जहण्णेणं तं चेव, उक्कोसेणं बावीससागरोवमाइं, कसायकुसीलस्स जहण्णेणं तं चेव, उक्कोसेणं तेत्तीससागरोवमाइं, णियंठस्स अजहण्णमणुक्कोसेणं तेत्तीससागरोवमाइं। पुलागस्स असंखेज्जा संजमट्ठाणा, एवं जाव कसायकुसीलस्स, णियंठसिणाताणं एगे अजहण्णमणुक्कोसए संजमट्ठाणे, एतेसिं पुलागादीणं संजमट्ठाणाणं कतरे कतरेहिंतो अप्पगा वा बहुगा वा उभया वा विसेसाहिया वा ?, णियंठसिणाताणं अजहण्णमणुक्कोसा संजमट्ठाणा सव्वत्थोवा, दोण्हवि तुल्ला, पुलागस्स असंखेज्जगुणा, एवं बउसकुसीलाणं असंखेज्जगुणा, पुलागस्स अणंता चारित्तपज्जवा, एवं जाव सिणातस्स, पुलागेणं पुलागस्स सट्ठाणसण्णिगासेणं चरित्तपज्जवेहि य सिय हीणे सिय तुल्ले सियऽब्भहिते, जइ हीणे वा अणंतभागहीणे वा असंखेज्जभागहीणे वा संखेज्जगुणहीणे वा, एवं अब्भाहियएवि, पुलाए बउसस्स परट्ठाणसंनियासेणं चारित्तपज्जवेहिं हीणो, णो तुल्लो, णो अब्भहिए, जइ हीणे अणंतगुणहीणे सेसेहिं, एवं पडिसेवगस्स कसायकुसीलस्स छट्ठाणपडिए, णियंठसिणाता जहा बउसस्स, एवं सेसेहिवि सह संजोगो कायव्वो, उवरिल्ला अब्भाहिया हेट्ठिल्ल(का हीणा)।पुलाए सजोगी तीहिवि जोगेहिं,एवं जाव णियंठो,सिणातो सजोगी वा अजोगी वा। पुलाए सागारोवउत्ते चेव अणागारोवउत्ते चेव, एवं जाव सिणातो। पुलाए सकसायी तं संजलणेहिं चउहिं, एवं जाव पाडिसेवओ, कसायकुशीलो छहिं, णियंठो एक्कांते सुक्कलेसाए, सिणातो परमसुक्कलेसाए। ते पुलाए वड्ढमाणा हीयमाणा अवट्ठिता?, तीहिवि परिणामतेहिं, एवं बउसकुसीलावि, णियंठसिणाता वड्ढमाणा अवट्ठियपरिणामा वा, पुलाए वड्ढमाणपरिणामा जहण्णेणं एक्कं समयं, उक्कोसेणं अंतोमुहुत्तं, एवं हीयमाणेवि, अवट्ठिए जहण्णेणं एक्कं समयं, उक्कोसेणं सत्त समया, एवं जाव णियंठो

सिणातो अवट्ठियपरिणामए जहण्णेणं अंतोमुहुत्तं, उक्कोसेणं देसूणा पुव्वकोडी। पुलाए आउयवज्जाओ सत्त कम्मपगडीओ बंधति, बउसो सत्त वा अट्ठ वा बन्धति, एवं पडिसेवएवि, कसायकुसीले सत्त वा अट्ठ वा छ वा बन्धति, छ आउयमोहणिज्जवज्जा· बंधति, णियंठे एगं वेदणिज्जं बन्धति, सिणाए बंधए वा अबंधए वा, जति बंधए वेदणिज्जं एगं बन्धति, पुलाए अट्ठ कम्म· ओ वेदेति, णियंठो मोहणिज्जवज्जाओ सत्त वेदेति, सिणाए वेदणिज्जआउयणामगोत्ताओ पगडीओ वेदति, एवं जाव कसायकुसीले, णियंठो मोहणिज्जवज्जाओ सत्त वेदेति, सिणाए वेदणिज्जआउयणामगोत्ताओ चत्तारि वेदेति। पुलाए चेव वेदणिज्जआउअवज्जाओ छ उदीरेइ, बउसे सत्त वा छ वा उदीरेति, आउवेदणिज्जवज्जाओ छ उदीरेति, एवं पडिसेवएवि, कसायकुसीले सत्त वा अट्ठ वा छ वा पंच वा उदीरेति, आउवेदणिज्जमोहणिज्जवज्जाओ पंच उदीरेति, ( णियंठे ) पंच वा दोन्नि वा उदीरेति, दोन्नि उदीरमाणे णामं गोत्तं च उदीरेति, सिणाए उदीरए वा अणुदीरए वा, जति उदीरेति णामं गोत्तं च उदीरेति। पुलागे पुलागत्तं चइत्ता कसायकुसीलत्तं वा असंजमं वा उवसंपज्जति, पडिसेवओ पडिसेवं चइत्ता बउसत्तं वा कसायकुसीलत्तं वा असंजमं वा संजमासंजमं वा उवसंपज्जइ, कसायकुसीले कसायकुसीलत्तं चइत्ताणं पुलागत्तं वा बउसत्तं वा संजमं वा संजमासंजमं वा उवसंपज्जति, णियंठत्तणं चइत्ता कसायकुसीलत्तं वा सिणायत्तं वा असंजमं वा उवसंपज्जति, सिणा-यतो सिणायत्तं चइत्ता सिद्धिगतिं उवसंपज्जति। पुलाए णोसंनोवउत्तो होज्जा, बउसपडिसेवणकसायकुसीला उभयं वावि। णियंठ-सिणाता जहा पुलाए आहारए होज्जा, एवं जाव णियंठे, सिणाते उभयहावि। पुलाए जहण्णेणं एगं भवं होज्जा, उक्कोसेणं तिण्णि भवग्गहणाइं, बउसे जहण्णेणं एगं उक्कोसेणं अट्ठ, एवं जहा कसायकुसीले, णियंठे जहा पुलाए, सिणाए एक्कं। पुलागस्स एग-भवग्गहणिया आगरिसा जहण्णेणं एक्को उक्कोसेणं सतग्गसो, एवं जाव कसायकुसीलस्स, णियंठस्स जहण्णेणं एक्को उक्कोसेणं

दोन्नि, सिणातस्स एक्को, पुलागस्स णाणाभवग्गहणिया आगरिसा जहण्णेणं दोन्नि उक्कोसेणं सत्त, बउसस्स जहण्णेणं दोन्नि उक्कोसेणं सहस्सग्गसो, एवं जाव कसायकुसीलस्स, णियंठो जहण्णेणं दोन्नि उक्कोसेणं पंच, सिणातस्स णत्थि एक्कोऽवि। पुलाए कालओ केच्चिरं होति?, जहण्णेणं अंतोमुहुत्तं उक्कोसेणवि अंतोमुहुत्तं, बउसे जहन्नेणं एक्कं समयं, उक्कोसेणं देसूणा पुव्वकोडी, एवं जाव कसायकुसीले, णियंठे जहा पुलाए, सिणाए जहा बउसे। पुलाका बहवः, पुलाकत्वेन कियच्चिरं कालं [अंतरं] होति?, जहण्णेणं एक्कं समयं, उक्कोसेणं अंतोमुहुत्तं, एवं नियंठावि, अवसेसा सव्वद्धं। पुलागस्स केवतियं कालं अंतरं होति?, जहण्णेणं अंतोमुहुत्तं उक्कोसेणं अणंतं कालं, अवड्ढपोग्गलपरियट्टं देसूणं, एवं जाव णियंठस्स, सिणातस्स नत्थि अंतरं, पुलागाणं केवतियं कालं अंतरं होति?, जहण्णेणं एक्कं समयं, उक्कोसेणं संखेज्जाइं वासाइं, एवं णियंठाणवि जहण्णेणं, उक्कोसेणं छम्मासो, सेसाणं णत्थि अंतरं। पुलागस्स तिन्नि समुग्घाता पण्णत्ता, तंजहा–वेदणा कसाया मारणंतिया, बउसपडिसेवगाणं पंच, तिन्नि ते चेव, विउव्विए तेयए य, कसायकुसीलस्स छ, पंच ते चेव, आहारए य, णियंठस्स नत्थि एक्कोऽवि, सिणातस्स एक्को, केवलिसमुग्घातो। पुलाए लोगस्स कतिभाते होज्जा?, किं संखेज्जतिभागे असंखेज्जतिभाए होज्जा? संखेज्जेसु भाएसु होज्जा? असंखेज्जेसु भाएसु होज्जा? सव्वलोएसु होज्जा?, गोयमा! असंखेज्जतिभागे होज्जा, सेसेसु पडिसेहो, एवं जाव णियंठे, सिणाते सव्वेसु होज्जा, एवं फुसणाणवि। पुलागो खओवसमिते भावे होज्जा, एवं जाव कसायकुसीले, णियंठे खइए वा उवसमिए वा भावे होज्जा, सिणाते खइए भावे होज्जा, एवं पुण माणा, (पुलाए णं पुव्वपडिवण्णया) पिया पडिवज्जमाणयावि होज्जा?, गोयमा! सिय अत्थि, सिय णत्थि, जति अत्थि जहन्नेणं एक्को वा दो वा तिन्नि वा, उक्कोसेणं सयपुहुत्तं, पुव्वपडिवत्तिया सिय अत्थि सिय णत्थि, जति अत्थि

जहण्णेणं एक्को वा दो वा तिन्नि वा, उक्कोसेणं सहस्सपुहुत्तं, बउसावि एगसमएणं केवतिया पडिवज्जमाणया, (सिय अत्थि सिय णत्थि) जति अत्थि जहण्णेणं एक्को वा दो वा तिन्नि वा, उक्कोसेणं सहस्सपुहुत्तं, पुव्वपडिवण्णया जहण्णेणं उक्कोसेणवि कोडिसयपुहुत्तं, एवं कुसीलपडिसेवगावि, कसायकुसीला पडिवज्जमाणया जति अत्थि जहण्णेणं एक्को, उक्कोसेणं सहस्सपुहुत्तं, पुव्वपडिवण्णया जहण्णेणवि उक्कोसेणवि कोडिसहस्सपुहुत्तं, णियंठा पडिवज्जमाणया जति अत्थि जहण्णेण एक्को वा दो वा तिन्नि वा, उक्कोसेणं बावट्ठं [ति]सतं, खवगाणं चउप्पण्णा होंति, उवसमगाण उ पुव्वपडिवण्णया जति अत्थि जहण्णेणं एक्को वा दो वा तिण्णि वा, उक्कोसेणं सयपुहुत्तं, सिणाया पडिवज्जमाणया जति अत्थि जहण्णेणं एक्को वा दो वा तिन्नि वा, उक्कोसेणं अट्ठसयं, पडिवन्नस्स जहण्णेण उक्कोसेणवि कोडिपुहुत्तं। एते णं भंते, पुलागबकुसकुसीलणियंठसिणायाणं कतरे कतरेहिंतो अप्पा वा बहुया वा तुल्ला वा विसेसहिया वा ?, गोतमा! सव्वत्थोवा णियंठा, पुलागा संखेज्जगुणा, सिणाता संखेज्जगुणा, बउसा संखेज्जगुणा, पडिसेवणाकुसीला संखेज्जगुणा, कसायकुसीला संखेज्जगुणा इति ॥ उक्तो नामनिष्पन्नो निक्षेपः, इदानीं सूत्रालापकस्यावसरः, असति सूत्रे कस्यालापकाः?, सूत्रं च सूत्रानुगमे भविष्यति, तत्रानुगमो द्विविधः-सूत्रानुगमो निर्युक्त्यनुगमश्च, निर्युक्त्यनुगमस्त्रिविधः- निक्षेपनिर्युक्तिः उपोद्घातनिर्युक्तिः सूत्रस्पर्शिकानिर्युक्तिश्च, यो यस्य विषयः स पूर्वोक्तः, सूत्रादिचतुष्टयं युगपद्गच्छति, एत्थ य सुत्ताणुगमो इत्यादि, सूत्रानुगमे सूत्रमुच्चार्यते, तच्चेदं-'सिद्धाण णमोकिच्चा' (६९९) इत्यादि, सिद्धस्यैवाध्ययनस्य प्रकटार्थस्यादि यत्किंचिद्वक्तव्यं तदुच्यते-सिद्धार्थानां परिनिष्ठितार्थानां नमस्कृत्वा संयतानां च, भावतः परमार्थतः, धर्म्मवतां तथ्यां अनुशास्ति शृणुत मम, क एवमाह?-सुधर्म्मस्वामी, आख्यानकप्रबंधेन कथयति, अत्थि मगहाविसए रायगिहं

नयरं, तत्थ सेणिओ राया विहारजत्ताते निग्गतो, विहारजत्ता परिभणिया भण्णति, तन्निमित्तं निग्गतेण मंडिकुच्छीनाम चेइयं, तहिं ठितो साहू दिट्ठो, झाणं झियायति, तत्थ तेसिं समुल्लावो—रण्णो साधुस्स य, एत्थ अज्झयणे वण्णिज्जति, प्रायसः प्रकटार्थ एव, स राजा तं साधुं दृष्ट्वा परं विस्मयं गतः, अहो अस्य साधोः रूपसौभाग्यसौम्यवत्ता क्षांतिमुक्ति असंगवत्ता च भोगेषु लक्ष्यते, तस्य पादौ प्रणम्य प्रदक्षिणं च कृत्वा नातिदूरे निषण्णः, ततो ब्रवीति, (कथं,तरुणो रूपवान् प्रव्रजितः?, साधुरुवाच- अनाथोऽहं, मम सुहृत् न विद्यते, अनुकंपको वा, ततो राजा प्रहसितः, एवंगुणसमेतस्य कथं नाथो तव न विद्यते ?, अहं तव नाथो भवामि, साधुरुवाच—त्वमपि अनाथ एव, मम नाथत्वं कथं करिष्यसि?, एवं साधो राज्ञश्च संवादो वर्ण्यते, जाव विहरति वसुधं विगतपाशोत्ति ब्रवीमि, नयाः पूर्ववत् ॥ विंशतितममध्ययनं महानियंठिज्जं २० ॥

उक्तं विंशतितममध्ययनं, इदानीं एकविंशतितमं, तस्य कोऽभिसंबंधः ?, विंशतितमे निर्ग्रंथोऽभिहितः, एकविंशतितमे विविक्तचर्याऽभिधीयते, स च निर्ग्रंथो विविक्तचर्यासहित एव भवतीति, नान्यः, अनेन संबंधेनायातस्यास्याध्ययनस्यानुयोगद्वारचतुष्टयं व्यावर्ण्य नामनिष्पन्ने निक्षेपे आदाणपदेन समुद्दपालिज्जं नाम, अर्थतो विविक्तचर्यानामाध्ययनमिदानीं एकविंशतितमं, नामनिक्षेपं करोति 'समुद्दपालिय'मिति, 'निक्खेवे' इत्यादि ( ४२९ ) नामादिको चतुर्द्धा निक्षेपः, नामस्थापनाद्रव्याणि पूर्ववत्, भावे समुद्रपालितायुर्वेदंतो भावतो तु णातव्वो, ततो समुट्ठितमिणं समुद्दपालिज्जमज्झयणं, उक्तो नामनिष्पन्नो निक्षेपः, इदानीं सूत्रालापकस्यावसरः, अस्माच्चावत्सूत्रं निपतितं तावदुक्तव्यं, सूत्रं चेदं—'चंपाए पालिए नाम'मित्यादि (७२९-७८४) यथाक्रमेवार्थे यत्पुनः निर्युक्तिकारो ब्रवीति तत्पुनरुक्तं, तत् ज्ञापयति— वैराग्यभावना येन जायते

न तत्पुनरुक्तं, पत्तसयमपुष्टिकारमेव भवति, तथा च आह— 'सज्झायज्झाणतव०' गाथा ॥ इदानीमाख्यानकप्रपंचेन तस्योत्पत्तिसंबंधि कारणं चाभिधीयते–चंपा णाम णगरी, तत्थ पालित्तो णाम सत्थवाहो, अहिगतो जीवाधे(दि)सु पदाथेंसु, अरहंतसासणरतो, सो अन्नया कयाई पोएणं पत्थितो, गणिमधरिमभरिएणं, गणिमं पूगफलजातिफलकक्कोलादि, समुद्दतीरे पिहुंडं नाम नगरं संपत्तो, तत्थ य वाणियएणं दारिया दिन्ना, विवाहिता य, अन्नया कयाइ तं पत्तिं आवण्णसत्तं घेत्तूण पत्थितो सदेसस्स, सा समुद्दमज्झंमि पसवती पुत्तं पियदसणं लक्खणजुत्तं, तस्स समुद्दपालोत्ति नामं कयं, पंचधाईहिं परिक्खित्तो परिवड्ढति, बावत्तरिकलापंडितो जातो, ततो जुव्वणपत्तस्स कुलरूवाणुसरिसं चउसट्ठिगुणोवेतं रूविणीनामभारियं आणावेति, सो रूविणीए सद्धिं दोगुंदओ व देवो भुंजति भोए निरुव्विग्गो। अह अन्नया कयाई सो ओलोयणचिट्ठितो पासति(नगरं), वज्झं णीणिज्जंतं पासेति, त दट्ठूणं सण्णी निव्वेगी णाणी सुकियदुक्कियाणं कम्माणं जाणती फलविवागं, चरित्तावरणीयकम्माणं खओवसमेणं च संबुद्धो संवेगमणुपत्तो संपत्तो आपुच्छिऊण जणणिं णिक्खंतो, सायकित्तीओ, काऊण तवच्चरणं बहूणि वासाणि सो धुयकिलेसो तं ठाणं संपत्तो जं संपत्ता ण सोयंति, एषोऽर्थः सूत्रेऽभिहित एव, तथापि निर्युक्तिकारेणाभिहितः, द्विर्बद्धं सुबद्धं भवतीति। इदाणीं यथे यदिकणिबज्झं तद् ब्रवीमि 'जहित्तुऽसग्गंथ'॥ (७५१-६८६)॥ इत्यादि, 'ओहाकृत्याणं' त्यक्त्वा असद्ग्रन्थं कर्म अशोभनं कर्म अशुभकर्मोपतिपन्नात्मकं, नरकतिर्यग्योनिप्रायोग्यमित्यर्थः, तं, महान् क्लेशो यस्मिन् तं महाक्लेशं, महामोहो महिमोहनमहामोहं, कृष्णं कृष्णलेश्यापरिणामि, भयानकं, असद्ग्रन्थं त्यक्त्वा संयमपर्याये स्थित्वा श्रुतधर्मे अभिरुचिं करोति, व्रतानि–महाव्रतानि, शीलानि च उत्तरगुणानि, तानि च अभिरोचयति, तथा परीषहा सहति अहिंसयान्नित्यादि, सव्वेहिं

परमार्थपदानि-ज्ञानदर्शनचारित्राणि, तेषु तिष्ठति, मिथ्यादर्शनादीनि श्रोतांसि छिन्नानि-अपगतानि तस्य, न क्वचित् ममीकारः, अतः न किञ्चनं विद्यते तस्य । 'विवित्ताणि'॥७८०-४८७॥स्त्रीपशुपण्डकविवर्जितानि लयनानि सेवति, तान्येव विशेष्यन्ते, अकृतमकारितमसंकल्पितानि संयमोपघातविरहितानि पूर्वऋषिभिः आचीर्णानि सेवति, तथा परीषहांश्च सहति, शोभनं ज्ञानं सज्ज्ञानं, सज्ज्ञानेन उपगतः महर्षिः, नास्य उत्तरो विद्यत इत्यनुत्तरं, सर्वप्रधान इत्यर्थः, तं अनुत्तरं धर्मसंचयं चरेत्ता मूलगुणज्ञानधारी भ्राजते सूर्य इव अन्तरिक्षे, स एवंगुणविशिष्टः शुभाशुभकर्मविप्रमुक्तः संशुद्धज्ञानदर्शनधरः तीर्त्वा संसारं समुद्रमिव समुद्रपाले अपुणागमं गतिं गतोत्ति, इति परिसमाप्तौ, नयाः पूर्ववत्, ब्रवीम्याचार्योपदेशात् ॥ एकविंशतितमं अध्ययनं समाप्तं ॥

उक्तं एकविंशतितमं, इदानीं द्वाविंशतितमं, तस्य कोऽभिसम्बन्धः ?, एकविंशतितमे विविक्तचर्याऽभिहिता, द्वाविंशतितमे वृत्ति(धृति)श्चरणं च वर्ण्यते,सा च विविक्तचर्या धृतिमता चरणसहितेन च शक्यते कर्तुम्,अनेन सम्बन्धेनायातस्यास्याध्ययनस्यानुयोगद्वारचतुष्टयं पूर्ववद् व्यावर्ण्य नामनिष्पन्ने निक्षेपे रहणेमिज्जंति- 'रहनेमी निक्खेवो०' ॥४४३॥४४४॥४४५-४८८॥ इत्यादि गाथात्रयं गतार्थं, तत्र कोऽसौ हरि(रह) णेमी?, तस्योत्पत्तिः गाथानुसारेणैव च विज्ञेया,सिवात्ति देवी अणोज्जंगी,किमुक्तं भवतिअनुपमाङ्गी, प्रथमाङ्गी इत्यर्थः, रहनेमिस्स चत्तारि वरिसशते गिहत्थत्तं, एगं वरिसं छउमत्थे, पंच वर्षशते केवली, उक्तो नामनिष्पन्नो निक्षेपः । इदानीं सूत्रालापकस्यावसरः, अस्मात् यावत् सूत्रं निपतितं तावद्वक्तव्यं, सूत्रं चेदं-'सोरियपुरंमि नयरे०' ॥ ७८३-४९१ ॥इत्यादि, सर्वं गाथानुसारेणेव णेयं यावत् 'जहा से पुरिसोत्तमो' त्ति बेमि, नयाः पूर्ववत्, ब्रवीम्याचार्योपदेशात्, द्वाविंशतितममध्ययनं रहनेमिज्जं समाप्तम् ॥

उक्तं द्वाविंशतितमं, इदानीं त्रयोविंशतितमं, तस्य कोऽभिसम्बन्धः ?, द्वाविंशतितमे धृतिश्चरणं च वर्णितं, सा धृतिर्धर्मे कर्त्तव्या, चरणं पुनश्चारित्रधर्म्म एव, अनेन सम्बन्धेनायातस्यास्याध्ययनस्यानुयोगद्वारचतुष्टयं पूर्ववद् व्याख्येयं नामनिष्फण्णे निक्षेपे केसीगोतमिज्जंति - 'निक्खेवो गोअमंमी चउक्कओ०' ॥४५१॥४५२॥४५३-४९८॥ इत्यादि गाथात्रयं गतार्थं, उक्तो नामनिष्फण्णो निक्षेपः। इदानीं सूत्रालापकस्यावसरः, अस्माद् यावद् सूत्रं निपतितं तावद्वोद्धव्यं, सूत्रं चेदं-'जिणे पासत्ति णामे' इत्यादि (८३२-४९९) सर्वं हृदि व्यवस्थाप्य यत्किंचित् वक्तव्यं तदुच्यते, अस्य पार्श्वस्वामिनः केशी नाम शिष्यो, ज्ञानचरणसंपन्नो बहुशिष्यपरिवारः श्रावस्त्यां तिंदुकनाम उद्यानं तत्र समवसृतः, अथ तस्मिन्नेव काले वर्द्धमानस्वामिनः शिष्य इंद्रभूती गौतमगोत्रः, तस्यैव नगरस्य बहिः कोष्ठकं नामोद्यानं तत्र स्थितः, द्वावपी अत्यर्थं लीनौ, मनोवाक्कायगुप्तावित्यर्थः, सुसमाहितौ, ज्ञानादिसमाधियुक्तावित्यर्थः, उभयोरपि शिष्याणां चिन्ता समुत्पन्ना-तुल्ये तीर्थकरत्वे किमिति शिक्षोपादाननानात्वं?, अथ तौ तत्र विज्ञाय शिक्षाणां प्रवितर्कितं समागमकृतमतीकौ द्वावपि केशिगौतमौ पूर्वतरं ज्येष्ठ इतिकृत्वा केशीं गौतमः प्रति विनयाद् यावद् शिष्यपरिवृतो तिंदुकोद्यानमुपगतः, तस्येदानीं केश्याचार्यः(स्य) अनुरूपां प्रतिपत्तिं कर्त्तुमुद्यतः, पलालांकुशतृणानि च साधुप्रायोग्यानि भूमौ निषद्यादुपरि निषद्यां च दापयति, तौ केशीगौतमौ भ्राजेते चंद्रसूर्यसमप्रभौ। तौ समागतौ ज्ञात्वा बहवः पाषंडा गृहस्था देवदानवाश्च समागताः, तयोः किल विवादो भविष्यति, ततः केशी गौतमं पृच्छति, गौतमोऽपि केशीं ब्रवीति, पृच्छ पृच्छस्वेति, यमा-महाव्रतानि, तत्र तत्र पार्श्वस्वामिना चत्वारि महाव्रतानि अभिधीयंते, तानि वर्द्धमानस्वामिना पंच, एककार्यप्रवृत्तानां किमिति विसंवादः?, कार्यं मोक्षः, केशिमेवं ब्रुवाणं गौतमः स प्रज्ञायते प्रज्ञा प्रज्ञप्ता-ज्ञानेनालोच्य तत्त्वातत्त्वानां च

पदार्थानां त्रिनिश्चयं आलोच्य देशकालानुरूपं धर्मं कथयंति तीर्थकराः, किं तद्विप्रत्ययकारणं ?, तदुच्यते, द्वादश कारणानि, (प्रोक्ता नि) एव निर्युक्तिकारेण प्रोक्तानि, 'सिक्खा वया य' इत्यादि ( ४५५-६-७ ) गाथात्रयसंगृहीतानि, शिक्षापदानि पंच महाव्रतानि, चत्वारि किमित्यभिहितानि प्रथमं, तथा लिंगद्विविध्यं किमिति द्वितीयं, आत्मा कषाया इंद्रियाणि च शत्रं तत्तृतीयं, पाशानां अवकर्शनं, वृत्तोच्छेदने पाशानां छेदनमित्यर्थः, रागद्वेषादयः पाशः, चतुर्थं तंतूद्धरणबंधने, तंतू-भवलता उद्धरणं-नाशनं तद्बंधने कृते भवलता(उद्धृता)भवति. अग्निविध्यापनं च पंचमं, अग्निः कषायः निर्वापणं श्रुतं शीलं च६,दुष्टाश्वो मनः७, पथः सम्यग्ज्ञानदर्शनचारित्राणि तस्य परिज्ञानं ८, महापरिश्रोतानि-मिथ्यादर्शनाविरतिप्रमादकषाययोगाः तेषां निवारणं ९, संसारार्णवस्य पारगमनं १०तमः-अज्ञानं तस्य विघातं-प्रकाशीकरणं ११, मोक्षस्थानस्य उपसंपदा, मोक्षस्थानप्राप्तिरित्यर्थः१२, एवमेतानि द्वादश स्थानानि सूत्रे व्याख्यातानि, पुरिमाण दुव्विसोज्झो उ इत्यादि, प्रथमतीर्थकरशिष्याणां दुर्विशोध्यः संयमः, ऋजुजडत्वात्, पश्चिमतीर्थकरशिष्याणां दुरनुपालकः संयमः, वक्रजडत्वात्, मध्यमतीर्थकरशिष्याणां ऋजुप्रज्ञत्वात् सुविशोध्यः सुखं चानुपाल्यः, अतो-अनेन कारणेन द्विधा प्रकल्पितः।'साधु गोतम'इत्यादि, सर्वत्र पृच्छा उत्तरं च बोद्धव्यं, तथा अ(स)चेलको मध्यमतीर्थकरैः, स(अ)चेलकः प्रथमपश्चिमैर्धर्मः प्रदर्शितः,लिंगद्वैविध्येऽपि इदमेव कारणं,तथा च संयमयात्रार्थमात्रकं(ग्रहणं)अग्रहणं भवितव्यमिति, परमार्थतस्तु ज्ञानदर्शनचारित्राणि मोक्षकारणं, न लिंगादीनि, एवं द्वादशसु कारणेषु व्याख्यातेषु केश्याचार्यो गौतमस्य स्तुतिं करोति, साधु गोमत ! पन्ना ते, छिन्नो मे संसओ इमो । नमो ते संसयातीत !, सव्वसत्तमहोदही ॥ ९१६ ॥ एवं तु संसए छिन्ने, केसी घोरपरक्कमो। वंदित्तु पंजलिउडो, गोतमं तु महामुणी ॥९१७॥ पंचमहव्वयजुत्तं, भावतो

इंद्रियार्थोव्याक्षेपेन गंतव्यं, न च स्वाध्यायं कुर्वता गंतव्यं, तन्मूर्त्तिना तदेव पुरस्कृत्य गंतव्यं। इदानीं भाषासमितिः-'कोहे माणे य' इत्यादि गाथाद्वयं(९२९-३०।५१७)क्रोधादिविरहितेन उपयुक्तेन भाषा भाषणीया, तथा चोक्तं-"पुव्वं बुद्धीए पासेत्ता,पच्छा वक्कमुदाहरे"इदाणिं एषणासमितिः'गवेसणा य'इत्यादि गाथाद्वयं(९३१-२।५१७)अन्वेषणग्रहणपरिभोगैःत्रिभिः कारणैराहाररुपधिशय्या विशोधयेत्,उद्गमोत्पादना च गवेषणाऽभिधीयते,ततः ग्रहणं,ततः परिभोगैः, चउक्कं विशोधयेत्, संयोजना प्रमाणं अंगारः धूमे कारणे च। इदानीमादाननिक्षेपणासमितिः-"ओहोवहिवुग्गहितं" इत्यादि गाथाद्वयं(९३३-४) द्विविधो उपधिः-औधिको औपग्राहिकश्च, इमं विधिं प्रयुंजीत-पूर्वं चक्षुषा प्रतिलेख्य पश्चाद्यत्नेन मृदुना प्रमार्जयेत्. इदानीं प्रतिष्ठापनासमितिः- 'उच्चारं पासवणं'इत्यादि गाथा(९३५।५१८)गतार्थे। उक्ताः समितयः,इदनीं गुप्तयोऽभिधीयंते,मनोगुप्तिः वचनगुप्तिः कायगुप्तिरिति, तत्र मनोगुप्तिश्चतुःप्रकारा, सत्या मृषा सत्यामृषा असत्यामृषा चेति चतुर्विधा मनोगुप्तिः, संरंभसमारंभात्मकं सत्यं न चिंतयति, एवं सत्यामृषं न चिंतयति, 'संकल्पः संरंभः परितापकरो भवेत् समारंभः। आरंभः व्यापत्तिकरः शुद्धनयानां तु सर्वेषां॥१॥एवं वाग्गुप्तिरिति विज्ञेया,इदानीं कायगुप्तिः'ठाणे निसियणे' इत्यादि गाथाचउक्कं(९४४-७।५२०)स्थानं कायोत्सर्गादि, निषीदनं त्वग्वर्त्तनं ऊर्ध्वं लंघनं उल्लंघनं, उत्क्षेपणं विक्षेपणं चेत्यर्थः,इंद्रियाणं युंजनं, स्थविरकल्पे जिनकल्पे वा स्थितः समारंभे आरंभे वा कायं वर्त्तमानं निवर्त्तयेत् यत्नेन, समितयश्चरणस्य प्रवर्त्तने, गुप्तयः अशुभनिवृत्तये, ता एताः प्रवचनमातरो यः समाचरति संसाराद्विमुच्यत इति,नयाः पूर्ववत्।।मार्गीयं २४॥

इदानीं पंचविंशतितमं,तस्य कोऽभिसंबंधः?,चतुर्विंशतितमे समितयो गुप्तयश्च व्यावर्णिताः, पंचविंशतितमे ब्रह्मगुणा व्यावर्ण्यंते, तच्च ब्रह्म समितिभिर्गुप्तिभिर्विना नैव भवति, अनेन संबंधेनायातस्यास्याध्ययनस्यानुयोगद्वारचतुष्टयं पूर्ववद्व्यावर्ण्य नामनिष्पन्ने

कर्म्मब्राह्मणं प्राणातिपातादिविरतं, वयं इमं ब्राह्मणं पशुबंधादिपापकर्म्मरहितं, निरतं न वं ब्राह्मणं मः, एवं जयघोषेण वि- जयघोषो भवति प्रतिपादितः, तस्यैव सकाशे प्रव्राजितः, तपः कृत्वा 'खवित्ता पुव्वकम्माइं' इत्यादि गतार्थाः (९९१।५३१) नयाः पूर्ववत् ॥ जण्णइज्जं नाम पंचवीसइममज्झयणं ॥

उक्तं पंचविंशतितमं, इदानीं षड्विंशतितमं, तस्य कोऽभिसंबंधः?, पंचविंशतितमे ब्रह्मगुणा व्यावर्णिताः, षड्विंशतितमे सामाचारी, ब्रह्मगुणावस्थितेन अवश्यमेव सामाचारी करणीया, अनेन संबंधेनायातस्यास्याध्ययनस्यानुयोगद्वारचतुष्टयं पूर्ववद्व्यावर्ण्य नामनिष्पन्ने निक्षेपे सामाचारी 'निक्खेवो सामंमि' इत्यादि गाथाद्वयं(४८३-४।५३२) व्यतिरिक्तं क्षीरशर्करादीनां सामभावो, भावसामं इच्छामिच्छादिकं, 'आयारे निक्खेवो' इत्यादिगाथात्रयं ४८७-८-९।५३३, व्यतिरिक्तो नामादि, नामने तिणिसलता, धोवने हरिद्रारागः, वासने कपिल्लकादि, शिक्षापने शुकसारिकादि, सुकरणे सुवर्णादि लब्धि(दध्ना)सार्द्धं गुडाः, एष द्रव्याचारः, भावे दशविधसामाचार्याचरणं, उक्तो नामनिष्पन्नो निक्षेपः, इदानीं सूत्रालापकस्यावसरः, असमाचारवत् सूत्रं निपतितं तावक्तव्यं, सूत्रं चेदं-'सामायारिं पव- क्खामि' इत्यादि(९९२-५३४) सर्वं प्रायः गतार्थं, तथापि यत् किंचिद्वक्तव्यं तदुच्यते-दिवा पौरुषिप्रमाणं छायया ज्ञायते, आसाढमासे इत्यादि प्रयोगेण, रात्रौ पुनः कथं नातं तद्?, उच्यते, यन्नक्षत्रं रात्रिं परिसमापयति तस्मिन्नक्षत्रे चतुर्भागे स्थिते प्रथमप्रहरः कालिकश्रुते तस्य तस्मिन् स्वाध्यायः क्रियते, तस्मिन्नेव नक्षत्रे नभोमध्ये स्थिते अर्द्धरात्रः, तस्मिन्नेव नक्षत्रे चतुर्भागे शेषस्थिते पश्चिमः प्रहरः, दशविधा सामाचारी चक्रवालसामाचारी न अत्राभिहिता, ( ओघरूपा च ) तौ च आवश्यकानुसारेण ज्ञातव्याविति, नयाः पूर्ववत्, षड्विंशति-तमं सामाचारीनामकं समाप्तं ॥

इदानीं सप्तविंशतितमं, तस्य कोऽभिसंबंधः?, षड्विंशतितमे सामाचारी अभिहितेति सप्तविंशतितमे अशठता व्यावर्णिता, सा च साधुना सर्वप्रयोजनेषु कर्त्तव्या, अनेन संबंधेनायातस्यास्याध्ययनस्यानुयोगद्वारचतुष्टयं पूर्ववद्व्यावर्ण्य नामनिष्पन्ने निक्षेपे 'खलुंकिज्जंमि' इत्यादि गाथाद्वयं (४९०-१।५४८) व्यतिरिक्तो बलीवर्दो मायी, खुलुंका गली मरालो शठो प्रतिलोमे अविनीत इत्येकार्थः, भावे खलुंको प्रतिलोमो, सर्वेषु मोक्षप्रयोजनेषु खलप्रकार 'अवदाली' इत्यादि (४९२-५४८) अवदाली स्कंधात्युगं योत्रं च गुविणाखति, उत्रसति, योत्रं युगं च भांडं भनक्ति, उत्पथेन गच्छति, विपथेन-विषमेण पथा गच्छति, 'जं किर दव्वं खुज्जं' इत्यादि गाथाद्वयं(४९३-४।५४८)गतार्थं, 'दंसमसक' इत्यादि (४९५।५४८) दंसमसकतुल्या जात्यादितुदनसीला,जलूकतुल्या दोषग्राहिनः, कपिकतुल्या असमाधिकारिणः,'तीक्ष्णा' निर्भिन्ना मृदवः अत्यंतं अज्ञाः चंडा-रोषणाः मार्दविका-अत्यंतमलसा, एते भावखलुंका। 'जे किर गुरुपडिणीया' इत्यादि गाथात्रयं(४९६-७-८।५४८)गतार्थं,उक्तो नामनिष्पन्नो निक्षेपः, इदानीं सूत्रालापकस्यावसरः, असमायावत् सूत्रं निपतितं तावद्वक्तव्यं,सूत्रं चेदं- 'थेरे गणधरे गग्गे' इत्यादि (१०४४ ५५०) स्थिरीकरणात् स्थविरः, गणं धारयतीति गणधरः-गणी, गच्छआचार्य इत्यर्थ , गर्गसगोत्र इति, मन्यते त्रिकालावस्थितं जगदिति मुनिः, विशारद हेतोः, संग्रहोपग्रहकुशल इत्यर्थः, गणिभावं प्रति आकीर्णः, सुतरां आचार्यगुणोपेतः, ज्ञानादिसमाधिकारकः, स इदानीं आचार्यः शिष्यस्योपदेशं ददाति-वहनं-रथादि तस्मिन् युक्तस्य बलीवर्दादेर्वहत यातव्योपदेशः अभिवर्त्तते, अथ न वहते तत् तस्यैवाशोभनं भवति, एवं शिष्यस्यापि संयमयोगान् सम्यग्वहतः संसारच्छेदो भवति, यः पुनः संयमयोगेषु अविनीतान् खलुंकान् योजयति असौ विधिचोदनामपि कुर्वन् क्लिश्यति, असमाधिं च लभते, लाघवं च प्राप्नोति, वक्ष्यमाणबलीवर्दसदृशाः कुशिष्या भवंति, ते च इमे

'एगं डसति पुच्छंमि'(१०४७ ५५२)इत्यादि गाथा सर्वा. एकं गलिबद्दे निशेणं पुच्छे पीलयति, अन्यमभीक्ष्णं तुदयति, अन्यदवतस्त्र दुष्टस्तत्कारणं कृत्वा पार्श्वस्थं उल्लङ्घ्य नश्यति, एवमादि किंचित् वर्णयिष्यामि, यादृशास्ते दुष्टबलीवर्दा दुष्टशिक्षा अपि तादृशा एव, धर्म्मयाने वा योजिता भज्यन्ते धृतिदुर्बला एभिः कारणैर्भज्यन्ते, रिद्धिरससातागुरुत्वात् , सबलशीलत्वात् , क्रोधनत्वात् , भिक्षाऽलसिकत्वात्, स्वपक्षपरपक्षमानभीरुकत्वाद्भज्यन्ते, अन्यैः अनुशास्यमानोऽपि अन्तरभाषया दोषोद्घट्टनान् कुरुते, आचार्याणां वचनं प्रतिकूलयति, कथं ?, क्वचित् प्रेष्यमाणो ब्रवीति नासौ मम जानाति, अथवा नासौ मम दास्यति, अथवा निर्गता सा एवमहं मन्ये, अन्यं तत्र प्रेष्यतां, प्रेष्यमाणो प्रतिकूलयति, ततः स्वच्छन्दी सुखं विहरति, राजवेष्टिमिव मन्यमानो भृकुटिं कुर्वंति, आचार्येण वाचिता संगृहीता भक्तपानेन पोषिता जातपक्षा पलायंते हंसा इव दिशोदिशं, ततो आचार्यो विचिंतयंति- खलुंकैः सह समागतः किं मम दुष्टशिष्यैः ?, आत्मा मेऽवसीदति-' यादृशा मम शिष्यास्तु, तादृशा गलिगर्दभा । गलिगर्दभं परित्यज्य, दृढं गृह्णात्यसौ तपः ॥१॥आचार्यः मृदुगंभीरसुसमाहितः शीलसमाहितो विहरतीति,नयाःपूर्ववत् । सप्तविंशतितमं समाप्तम् ॥

उक्तं सप्तविंशतितमं, इदानीमष्टाविंशतितमं, तस्य कोऽभिसम्बन्धः ?, सप्तविंशतितमे अशठता व्यावर्णिता, अष्टाविंशतितमे मोक्षमार्गोऽभिधीयते, मोक्षमार्गोऽशठस्यैव भवति, अनेन सम्बन्धेनायातस्यास्याध्ययनस्यानुयोगद्वारचतुष्टयं पूर्ववद्व्यावर्ण्य नामनिष्पन्ने निक्षेपे मोक्खमग्गगती-'णिक्खेवो मोक्खंमि०'॥४९९-५००-५५५॥ इत्यादि, गाथाद्वयं, द्रव्यव्यतिरिक्तो निगलादिषु, भावमोक्खो अट्ठविहकम्मसुक्खो नायव्वो भावमोक्खो, 'निक्खेवो मग्गंमि०' ॥५०१-२।५५५॥ इत्यादि गाथाद्वयं, व्यतिरिक्तो जले स्थले वा, भावमार्गो ज्ञानदर्शनचारित्राणि, 'निक्खेवो उ गतीए०' ॥ इत्यादि गाथात्रय ( ५०३-४ ५ ) व्यतिरिक्तं जीवानां

पुद्गलानां वा गतिः, भावगती पंचप्रकारा, मोक्षगतीए अधिकारो, उक्तो नामनिष्पन्नो निक्षेपः, इदानीं सूत्रालापकस्यावसरः, असाद् यावत् सूत्रं निपतितं तावद्वक्तव्यं, सूत्रं चेदं- 'मोक्खमग्गगतिं तच्चं०' ॥१०६१-५५६॥ इत्यादि, सर्वं प्रायः प्रकटार्थं, तथापि यत्किंचिद्वक्तव्यं तदुच्यते, चत्तारि कारणा ज्ञानदर्शनचारित्रतपांसि चतुष्टयमपि, ज्ञानदर्शनलक्षणं कथं ?, येन ज्ञान-दर्शनाभ्यां विना आत्मभावं न लभते, गुणानामाश्रयो द्रव्यं, जीवद्रव्यस्य ज्ञानादयो गुणाः, अजीवद्रव्यस्य रूपादयः गुणा, द्रव्या-सृताः पर्यायास्सृताश्च, पर्यायाः गुणाश्रिताश्च, धर्माधर्माकाशानि एकद्रव्यानी, न तेषां स्वतः प्रदेशकल्पना विद्यते, जीवाः पुद्गलाः कालाश्च अनन्तानि, वर्त्तनालक्षणः कालः बालयुवावृद्धत्वादिभिर्लक्षणैर्लक्ष्यते, पुद्गललक्षणं तत्रान्धकारश्चातपोद्योतादीनि, पर्यायलक्षणं एकत्वं पृथ-क्त्वं एकद्वित्र्यादिका संख्या संस्थानं-आकारविशेषः, संयोगवियोगौ, देवदत्तस्य गृहेण सह सम्बन्धः संयोगः, तस्माद् वियोगो विभागः, जीवादयस्तथ्याः पदार्थाः, तत्त्वा(थ्या)नां भावानां निसर्गादधिगमाद्वा शुद्धानां रुचिः सम्यग्दर्शनं, तद्दशप्रकारं निसर्गादि, कथं लक्ष्यते ?, तत्त्वानां भावानां गुणोत्कीर्त्तनेन सम्यग्ज्ञानानुष्ठानेन व्यापन्नकुदर्शनवर्जनेन च लक्ष्यते, सम्यग्दर्शनविरहितं चारित्रं न भवति, दर्शनं तु चारित्रविरहितमपि भवति, तथा ज्ञानं च दर्शनरहितं न भवति, ज्ञानेनापि विना चारित्रं न भवति, ज्ञानादिगुणविरहितस्य मोक्षो न भवति, अमुक्तस्य च निर्वृतिर्नास्ति, सुखं नास्तीत्यर्थः, ज्ञानादीनां विषयं प्रदर्शयति ज्ञानेन सर्व-पदार्थान् जानाति, दर्शनेन तानेव श्रद्धत्ते, चारित्रावस्थितस्यापूर्वपापग्रहणं न भवति, तपसा पूर्वोपात्तस्य कर्म्मणः क्षयं करोति । नयाः पूर्ववत् ॥ अष्टाविंशतितमं मोक्षमार्गगतिनामकमध्ययनं समाप्तं ॥

उक्तं अष्टाविंशतितमं, इदानीमेकोनत्रिंशत्तमं, तस्य कोऽभिसम्बन्धः?, अष्टाविंशतितमे मोक्षमार्गोऽभिहितः, एकोनत्रिंशत्तमे अवश्य-

मेवाप्रमादः करणीयः, स एव मोक्षमार्गः, अनेन सम्बन्धेनायातस्यास्याध्ययनस्यानुयोगद्वारचतुष्टयं पूर्ववद् व्यावर्ण्य नामनिष्पन्ने निक्षेपे अप्पमादज्झयणंति, आदानपदेनेदमध्ययनं सम्यक्त्वपराक्रममभिधीयते, गौणी संज्ञा अप्रमादश्रुतमिति, अन्ये तु वीतरागश्रुतमिति, तत्र द्रव्ये पत्रादिलिखितं, अथवा व्यतिरिक्तं सूत्रं पंचप्रकारं-अंडजादि, उक्तो नामनिष्पण्णो निक्षेपः, इदानीं सूत्रालापकस्यावसरः, अस्माद्यावत् सूत्रं निपतितं तावद्वक्तव्यं, सूत्रं चेदं-'सुतं मे आउसं! तेण'(१३सू०५७२)मित्यादि सर्वं, सम्यक्त्वसहितस्य पराक्रमः सम्यक्त्वपराक्रमः, पराक्रमः- उत्साहो, वक्ष्यमाणेषु प्रयोजनेषु उत्साहः करणीयः, प्रत्येककारणानि सिद्ध्यन्ति, संसारे स्थितश्च भवति संविग्नः, 'ओविजी भयचलनयोः' संसारोद्विग्नः, उक्तंच-' यथा मृगा मृत्युभयस्य भीता, उद्विग्नवासा न लभन्ति निद्राम्। एवं बुधा ज्ञानविबोधितात्मा, संसारभीता न लभन्ति निद्रां ॥१॥' संवेगेन कृतेन को गुणो भवति?, तदुच्यते-' संवेगेणं भंते! (जीवे) किं जणयति?, गोयमा! संवेगेणं रुद्धा जणयति'(१५सू०५९८ एवं सर्वेषु पदेषु पुच्छानिबन्धनं वाच्यं, निव्वेतेण सातासौख्यात् गृहस्थजनबन्धाच्च निर्वेदं करोति, निर्विण्णः सन् धर्मे उद्यमं करोति, भावसत्यं प्रतिलेखनादिक्रियां यथोक्तां सम्यगुपयुक्तः करोति, योगा-मनोवाक्कायाः, सत्यमनोयोगः कर्त्तव्यः, नासत्यमनोयोगः, एवं वागपि, काये लंघनप्लवनडेवनादि न करोति, एवं यावत् संभोगभत्तपच्चक्खाणेणं अणियट्टिं जणयति, अत्र प्रवृत्तौ प्रत्याख्यानशब्दो, यथा अभ्युद्यतो, अनिवृत्तिश्च तस्मिन् सयोगे भवति ' सेलेसी णं भंते! किं जणयति?, अकम्मताए जीवा सिज्झंति बुज्झंति मुच्चंति परिनिव्वायंति सव्वदुक्खाणं अंतं करोति, ब्रवीमीति, नयाः पूर्ववत् ॥ समाप्तं एकोनत्रिंशत्तमम् ॥ ॥२७३॥

उक्तं एकोनत्रिंशत्तमं, तस्य कोऽभिसम्बन्धः?, एकोनत्रिंशत्तमे अप्रमादो व्यावर्णितः, त्रिंशत्तमे तपोऽभिधीयते, तच्च तपः

अप्रमादसहितस्यैव भवति, अनेन सम्बन्धेनायातस्याध्ययनस्यानुयोगद्वारचतुष्टयं (५१३-४-५-६।५९९) पूर्ववद् व्यावर्ण्य नामनिष्पन्ने निक्षेपे तपोमार्गगती 'णिक्खेवो उ तवंमी ' इत्यादि, गाथाचतुष्टयं, व्यतिरिक्तो पंचतपादि, भावे द्वादशविधं तपः शेषं गतार्थं, उक्तो नामनिष्फण्णो निक्षेपः, इदानीं सूत्रालापकस्यावसरः, अस्माद् यावद् सूत्रं निपतितं तावद्वक्तव्यं, सूत्रं चेदं- 'जहा उ पावगं कम्मं ' इत्यादि(१०९८।६००)मर्थं, 'तप संतापे' तपसो मार्गः तपोमार्गः, गमनं गतिः, तपोमार्गस्य गतिः २, तपो येन प्रकारेण क्रियते इत्यर्थः, यदि पूर्वं संवृताश्रवद्वारः ततः तपसा निःशेषं कर्म्म क्षपयति, प्राणिवधादीन्याश्रवद्वाराणि, अनशनं द्विविधं-इत्वरं यावत्कथितं च, इत्वरं चतुर्थादि, तदा अनेन प्रकारेण षड्विधं भवति श्रेण्यादि, चतुर्थषष्ठाष्टमादि षण्मासपर्यवसाना श्रेणी, श्रेणी श्रेण्या गुणिता प्रतरं भवति, प्रतरं श्रेण्या गुणितं घनं भवति, तदा घनो वर्गितो वर्गो भवति, सोऽपि वर्गः पुनरपि वर्ग्यते ततो वर्गवर्गो भवति, षष्ठोऽपि चित्तो नानाप्रकारो प्रकीर्णतपोऽभिधीयते, तदन्यत्राभिहितं, शेषं दशवैकालिकचूर्णौ अभिहितं, एवमेयं तु द्विविधं, जे सम्मं आयरे मुणी। से खिप्पं संसारा मुंचति पंडितेत्ति बेमि, नयाः पूर्ववत् ॥ इति त्रिंशत्तमं अध्ययनं समाप्तम्

उक्तं त्रिंशत्तमं, अथैकत्रिंशत्तमं, तस्य कोऽभिसम्बन्धः?, त्रिंशत्तमे तपोमार्गगतिरभिहिता, एकत्रिंशत्तमे चरणविधिरभिधीयते, तपसा च विना चरणं नैव सम्पूर्णं भवति, अनेन सम्बन्धेनायातस्यास्याध्ययनस्यानुयोगद्वारचतुष्टयं पूर्ववद् व्यावर्ण्य नामनिष्फण्णे निक्षेपे चरणविधिरिति, 'निक्खेवे चरणंमि' इत्यादि गाथा पंच (५१७-८-९-२०-२१।६११) व्यतिरिक्ते चैत्यवन्दनको गच्छति, मोदकं भक्षयति, भावे पंचविधमाचारमाचरति, व्यतिरिक्ते इन्द्रियार्थानां विधिः, भावे संयमयोगस्य तपसश्च यो विधिः, उक्तो नामनिष्फ-

र्णो निक्षेपः॥ इदानीं सूत्रालापकस्यावसरः, अस्माद् यावत् सूत्रं निपतितं तावद्वक्तव्यं, सूत्रं चेदं-'चरणविधिं पवक्खामि' इत्यादि (११२५) सर्वं, असंयमाद् विरतः, संयमे प्रवर्त्तनं, मंडलग्रहणाच्चातुरंतः संसारः परिगृह्यते, नारकतिर्यग्योनिमनुष्यामरभावः, पिंडेषणायां अवग्रहप्रतिमासु भयस्थानेषु ब्रह्मगुप्तिषु च एवं प्रतिक्रमणानुसारेण ज्ञेयं, इत्येतेषु स्थानेषु यः प्रयत्नं करोति असौ संसाराद् विमुच्यते इति ब्रवीमीति, नयाः पूर्ववत् ॥ इति एकत्रिंशत्तमं अध्ययनं समाप्तम् ॥

उक्तं एकत्रिंशत्तमं, इदानीं द्वात्रिंशत्तमं, एकत्रिंशत्तमे चरणविधिरभिहिता,द्वात्रिंशत्तमे प्रमादस्थानान्यभिधीयंते,चरणं च अप्रमत्तस्यैव सम्पूर्णं भवति, अनेन सम्बन्धेनायातस्याध्ययनस्यानुयोगद्वारचतुष्टयं पूर्ववद् व्यावर्ण्य नामनिष्पन्ने निक्खेवे प्रमादस्थानं, 'निद्दनिक्खेवो उ पमाते' इत्यादि गाथा अष्ट ॥ (५२२ ३-४ ५ ६-७-८-९।५२०)॥ व्यतिरिक्तो द्रव्यप्रमादः मद्यमधुप्रसन्नादि, भावप्रमादः निद्रा विकथा कषाये इन्द्रियाणां च क्रियास्थानं पूर्वोक्तं,तीर्थकराणां अप्रमत्तता व्यावर्ण्यते, ऋषभस्वामिनो वर्षसहस्रेऽपि संकलिज्जमाणे अहोरात्रं प्रमादः, वर्द्धमानस्वामिनः द्वादशसु वर्षेषु समधिकेषु संकलिज्जमाणे अन्तर्मुहूर्तं प्रमादो, ये पुनर्नित्यं प्रमादास्ते संसारसागरं पर्यटन्ति, उक्तो नामनिष्पन्नो निक्षेपो, इदानीं सूत्रालापकस्यावसरः, अस्माद् यावत् सूत्रं निपतितं तावद् वक्तव्यं, सूत्रं चेदं-'अच्चंतकालस्स०'॥११५६ ६२२॥इत्यादि, सर्वं, अत्यन्तकालः अतीतोऽनागतो वर्त्तमानः परिगृह्यते, समूलस्य सर्वदुःखस्य यः प्रमोक्षस्तस्य, सर्वमूलस्येति दुःखस्य मूलं कर्म्म, कर्म्मणो मूलं रागद्वेषौ, तौ छित्त्वा भवति मोक्षो तन्मे प्रतिपादयितुः एकान्तहितं शृणुत, स मोक्ष एवं भवति ज्ञानप्रभावनया अज्ञानमृषावर्जनेन रागद्वेषक्षयेण गुरुवृद्धसेवया बालजनवर्जनेन स्वाध्यायेन धृत्या च भवति, तथा आहारेण मितेन एषणीयेन च, निपुणार्थे बुद्धिर्यस्य स सेव्यो गीतार्थः,विविक्तं स्थानं तद्विवेकयोग्यं समाधि-

ण्यभिधीयन्ते, प्रमादवशगो जीवः कर्म्म बध्नाति, अनेन सम्बन्धेनायातस्यास्याध्ययनस्यानुयोगद्वारचतुष्टयं पूर्ववद् व्याख्येयं नामनिष्पन्ने निक्षेपे कम्मपगडी 'कम्मंमि निक्खेवो०'॥ इत्यादिगाथा अष्ट (५३०.१-२-३-४-५-६-७।६४०.निर्युक्तौ)) व्यतिरिक्तं कर्म्म द्रव्यं च नोकर्म्मद्रव्यं, अनुदयः कर्म्मणो, नोकर्म्मद्रव्यं लेप्यकर्म्मादि, भावे कर्म्मणां उदयः, व्यतिरिक्तो द्रव्यप्रकृतिः कर्मणो कर्माभ्यां कर्मणि अनुदयः, नोकर्म्म ग्रहणप्रायोग्यानि मुक्तानि द्रव्याणि, भावे मूलोत्तरप्रकृतीनां उदया,– पयतिट्ठिति अणुभागो पदेसकम्मं च सुट्ठु णाऊणं । एतेसिं संवरे खलु खवणे उ सयाति जइतव्वं॥१॥ उक्तो नामनिष्पन्नो निक्षेपः, इदानीं सूत्रालापकस्यावसरः, अस्माद्यावत्सूत्रे निपतितं तावद्वक्तव्यं, सूत्रं चेदं-'अट्ठ कम्माइं वोच्छामी' त्यादि(१२६७-६४१) सर्वं, तेषां कर्म्मणां चतुःप्रकारो बन्धो भवति प्रकृतिबन्धः स्थितिबन्ध अनुभागबन्ध प्रदेशबन्ध इति, प्रकृतिशब्देन स्वभावो भेदश्चाभिधीयते, स्थितिः कालावस्थानं, अनुभावो यो यस्य कर्म्मणः शुभो अशुभो वा विपाकः, प्रदेशबन्धः जीवप्रदेशानां कर्म्मपुद्गलानां च सम्बन्धः, तत्र प्रकृतिबन्धो द्विविधः मूलोत्तरभेदा, अष्टौ मूलप्रकृतयः, तद्यथा-ज्ञानावरणीयं दर्शनावरणीयं वेदनीयं मोहनीयं आयुष्कं नामं गोत्रं अन्तरायमिति, ज्ञानमावृणोतीति ज्ञानावरणीयं, दर्शनमावृणोतीति दर्शनावरणीयं, वेदनां करोतीति वेदनीयं, मुह्यतीति मोहनीयं, येन नारकादिभावास्तिष्ठति तदायुष्कं, गतिजात्यादिभिः प्रकारैर्नामयतीति नाम, प्रधानमप्रधानं वा करोतीति गोत्रं, अन्तरायं करोतीति अन्तरायिकं, इदानीं उत्तरप्रकृतयोऽभिधीयंते-ज्ञानावरणं पंचप्रकारं आभिनिबोधिकश्रुतावधिमनःपर्यायकेवलानि, एषामावरणं, दर्शनावरणं नवभेदं चक्षुरचक्षुरवधिकेवलानि तेषामावरणं, निद्रा निद्रानिद्रा प्रचला प्रचलाप्रचला स्त्यानर्द्धिरिति, एषामुदयं करोतीति, वेदनीयं सातमसातं च, तयोरुदयं करोतीति, मोहनीयं अष्टाविंशतिभेदं, तत्समासतो द्विविधं-दर्शनमोहं चरित्तमोहं, दर्शनमोहं

कामां भवन्ते, रागद्वेषौ कर्मबीजं, मोहप्रभवं कर्म, कर्म च जातिमरणस्य मूलं, जातिमरणं दुःखमूलं, रागद्वेषौ मोहश्च यथा उद्ध्रियते समुद्धार्यं तस्थे, रसा ते कामं न निषेवणीया, आसेविता दीप्तिकरा भवन्ति, प्रीणितं कुर्वन्तीत्यर्थः, प्रीणितं च कामा समभिद्रवन्ति, द्रुमं यथा स्वादुफलं हि पक्षिणः, यथा दवाग्निः प्रचुरेंधनः समारुतो नोपशमं गच्छति, तथेन्द्रियाग्निरपि प्रकामभोजने शमं न गच्छति, विविक्तशय्यासनयन्त्रितानां ओमासनानां दमितेन्द्रियाणां रागादयो नाभिभवन्ति चित्तं, पराजितो व्याधिरिवौषधीभिः ये इन्द्रियाणां विषया मनोज्ञा न तेषु रागं करोति, अमनोज्ञेषु च द्वेषं, तदाऽसौ समो भवति, चक्षु रूपं गृह्णाति, रूपेणापि गृह्यते चक्षुः, रूपेषु यो गृद्धिमुपैति तीव्रां स शीघ्रमेव विनश्यति, आलोकलोलो यथा पतंगः, रूपानुगतोऽसौ चराचरप्राणिनो हिनस्ति, तस्माद्रागानुगतस्य परिग्रहे दोषः, यस्य जायते परिग्रहादृणाहारित्वं ततो मृषावादः, एवं रागद्वेषानुगतो बहुकर्मसंचयो भवति, रूपादिषु विशोको भवति, दुःखौघपरंपरेण च न लिप्यते, जलेन वा पद्मिनीपत्रं, एवं श्रोत्रघ्राणजिह्वास्पर्शा, विनाशमागच्छति इहलोके परलोके च, इहलोके तावत् शब्दात् मृगो घ्राणान्मधुकरः मत्स्यो जिह्वया गजो स्पर्शेन, इहलोके एवं विनाशमागच्छन्ति, विषयेन न ते दोषमुत्पादयन्ति, किन्तु परेषु रागं द्वेषं वा करोति स बध्यते, एवं क्रोधादयोऽपि कर्मबन्धहेतवो भवन्ति, यः पुनर्विरक्तभावः स कर्मबन्धेन न लिप्यते, ततः शुभाध्यवसायिनः क्षपकश्रेण्यनुप्रवेशः, ततः क्रमेण मोहनीयज्ञानावरणीयदर्शनावरणीयान्तरायेषु क्षयं गतेषु केवलं सम्पूर्णं ज्ञानमुत्पद्यते, ततः आयुषः क्षयात् सादिकमनन्तमव्याबाधं निर्वाणसुखं प्राप्नोति, एवं अनादिकालप्रभवस्य मोक्षो व्याख्यातः, येन अत्यन्तसुखिनः सदा भवन्ति। इति ब्रवीमि, नयाः पूर्ववत्॥ समाप्तं द्वात्रिंशत्तममध्ययनं॥

उक्तं द्वात्रिंशत्तमं, इदानीं त्रयस्त्रिंशत्तमं उच्यते, तस्य कोऽभिसम्बन्धः?, द्वात्रिंशत्तमे प्रमादोऽभिहितः, त्रयस्त्रिंशत्तमे कर्मा-

ण्यभिधीयन्ते, प्रमादवशगो जीवः कर्म्मं बध्नाति, अनेन सम्बन्धेनायातस्यास्याध्ययनस्यानुयोगद्वारचतुष्टयं पूर्ववद् व्यावर्ण्य नामनिष्पन्ने निक्षेपे कम्मपगडी 'कम्मंमि निक्खेवो०'॥ इत्यादिगाथा अष्ट (७२०.१-२-३-४-५-६-७।६४० नियुक्तौ)) व्यतिरिक्तं कर्म्मद्रव्यं च नोकर्म्मद्रव्यं, अनुदयः कर्म्मणो, नोकर्म्मद्रव्यं लेप्यकर्म्मादि, भावे कर्म्मणां उदयः, व्यतिरिक्तो द्रव्यप्रकृतिः कर्मणो कर्माण्यां कर्मणि अनुदयः, नोकर्म्म ग्रहणप्रायोग्यानि मुक्तानि द्रव्याणि, भावे मूलोत्तरप्रकृतीनां उदयः,- पयतिट्ठिति अणुभागो पदेसकम्मं च सुट्ठु णाऊणं। एतेसि संवरे खलु खवणे उ सयाऽवि जइतव्वं॥१॥ उक्तो नामनिष्पन्नो निक्षेपः, इदानीं सूत्रालापकस्यावसरः, अस्माद्यावत्सूत्रं निपतितं तावद्वक्तव्यं, सूत्रं चेदं-'अट्ठ कम्माइं वोच्छामी' त्यादि(१२६७-६४१) सूत्रं, तेषां कर्मणां चतुःप्रकारो बन्धो भवति प्रकृतिबन्धः स्थितिबन्ध अनुभागबन्ध प्रदेशबन्ध इति, प्रकृतिशब्देन स्वभावो भेदश्चाभिधीयते, स्थितिः कालावस्थानं, अनुभावो यो यस्य कर्म्मणः शुभो अशुभो वा विपाकः, प्रदेशबन्धः जीवप्रदेशानां कर्मपुद्गलानां च सम्बन्धः, तत्र प्रकृतिबन्धो द्विविधः मूलोत्तरभेदः, अष्टौ मूलप्रकृतयः, तद्यथा ज्ञानावरणीयं दर्शनावरणीयं वेदनीयं मोहनीयं आयुष्कं नामं गोत्रं अन्तरायमिति, ज्ञानमावृणोतीति ज्ञानावरणीयं, दर्शनमावृणोतीति दर्शनावरणीयं, वेदनां करोतीति वेदनीयं, मुह्यतीति मोहनीयं, येन नारकादिभावास्तिष्ठति तदायुष्कं, गतिजात्यादिभिः प्रकारैर्नामयतीति नाम, प्रधानमप्रधानं वा करोतीति गोत्रं, अन्तरायं करोतीति अन्तरायिकं, इदानीं उत्तरप्रकृतयोऽभिधीयंते-ज्ञानावरणं पंचप्रकारं आभिनिबोधिकश्रुतावधिमनःपर्यायकेवलानि, एषामावरणं, दर्शनावरणं नवभेदं चक्षुरचक्षुरवधिकेवलानि तेषामावरणं, निद्रा निद्रानिद्रा प्रचला प्रचलाप्रचला स्त्यानर्द्धिरिति, एषामुदयं करोतीति, वेदनीयं सातमसातं च, तयोरुदयं करोतीति, मोहनीयं अष्टाविंशतिभेदं, तत्समासतो द्विविधं-दर्शनमोहं चरित्तमोहं, दर्शनमोहं

कामो भजते, रागद्वेषौ कर्मबीजं, मोहप्रभवं कर्म, कर्म च जातिमरणस्य मूलं, जातिमरणं दुःखमूलं, रागद्वेषौ मोहश्च यथा उद्ध्रियते तमुपायं वक्ष्ये, रसा ते कामं न निषेवणीया, आसेविता दीप्तिकरा भवन्ति, प्रीणितं कुर्वन्तीत्यर्थः, प्रीणितं च कामा समभिद्रवन्ति, द्रुमं यथा स्वादुफलं हि पक्षिणः, यथा दवाग्निः प्रचुरेंधनः समारुतो नोपशमं गच्छति, तथेन्द्रियाग्निरपि प्रकामभोजने शमं न गच्छति, विविक्तशय्यासनयंत्रितानां ओमासणाणं दमितेन्द्रियाणां रागादयो नाभिभवन्ति चित्तं, पराजितो व्याधिरिवौषधीभिः ये इन्द्रियाणां विषया मनोज्ञा न तेषु रागं करोति, अमनोज्ञेषु च द्वेषं, तदाऽसौ समो भवति, चक्षु रूपं गृह्णाति, रूपेणापि गृह्यते चक्षुः, रूपेषु यो गृद्धिमुपैति तीव्रां स शीघ्रमेव विनश्यति, आलोकलोलो यथा पतंगः, रूपानुगतोऽसौ चराचरप्राणिनो हिनस्ति, तस्माद्रागानुगतस्य परिग्रहो दोषः, यस्य जायते परिग्रहादत्ताहारित्वं ततो मृषावादः, एवं रागद्वेषानुगतो बहुकर्म्मसंचयो भवति, रूपाद्विरक्तो विशोको भवति, दुःखौघपरंपरेण च न लिप्यते, जलेन वा पद्मिनीपत्रं, एवं श्रोत्रघ्राणजिह्वास्पर्शा, विनाशमागच्छति इहलोके परलोके च, इहलोके तावत् शब्दान् मृगो घ्राणान्मधुकरः मच्छो जिह्वया गजो स्पर्शेन, इहलोके एवं विनाशमागच्छन्ति, निश्चयेन न ते दोषमुत्पादयन्ति, किन्तु यस्तेषु रागं द्वेषं वा करोति स बध्यते, एवं क्रोधादयोऽपि कर्मबन्धहेतवो भवन्ति, यः पुनर्वीतरागः स कर्मबन्धेन न लिप्यते, ततः शुभाध्यवसायिनः क्षपकश्रेण्यनुप्रवेशः,ततः क्रमेण मोहनीयज्ञानावरणीयदर्शनावरणीयांतरायेषु क्षयं गतेषु केवलं-सम्पूर्णं ज्ञानमुत्पद्यते, तत आयुषः क्षयात् सादिकमनन्तमव्याबाधं निर्वाणसुखं प्राप्नोति, एवं अनादिकालप्रभवस्य मोक्षो व्याख्यातः, येन अत्यन्तसुखिनः सत्त्वा भवन्ति। इति ब्रवीमि, नयाः पूर्ववत्॥ समाप्तं द्वात्रिंशत्तममध्ययनं॥

उक्तं द्वात्रिंशत्तमं, इदानीं त्रयस्त्रिंशत्तमं उच्यते, तस्य कोऽभिसम्बन्धः?, द्वात्रिंशत्तमे प्रमादोऽभिहितः. त्रयस्त्रिंशत्तमे कर्म्मा-

प्रमादवशगो जीवः कर्म्म बध्नाति, अनेन सम्बन्धेनायातस्यास्याध्ययनस्यानुयोगद्वारचतुष्टयं पूर्ववद् व्यावर्ण्य नाम-
ष्यभिधीयन्ते, प्रमादवशगो जीवः कर्म्म बध्नाति, अनेन सम्बन्धेनायातस्यास्याध्ययनस्यानुयोगद्वारचतुष्टयं (५३०.१-२-३-४-५-६-७|६४०.नियुक्तौ)) व्यतिरिक्तं कर्म्म
निष्पन्ने निक्षेपे कम्मपगडी 'कम्मंमि निक्खेवो०'॥इत्यादिगाथा अष्ट (५३०.१-२-३-४-५-६-७।६४०.नियुक्तौ)) व्यतिरिक्तं कर्म्म
द्रव्यं च नोकर्म्मद्रव्यं, अनुदयः कर्म्मणो, नोकर्म्मद्रव्यं लेप्यकर्म्मादि, भावे कर्म्मणां उदयः, व्यतिरिक्तो द्रव्यप्रकृतिः कर्मणो कर्मा-
भ्यां कर्मणि अनुदयः, नोकर्म्म ग्रहणप्रायोग्यानि मुक्तानि द्रव्याणि, भावे मूलोत्तरप्रकृतीनां उदया,- पयातिट्ठिति अणुभागो
पदेसकम्मं च सुट्ठु णाऊणं । एतेसिं संवरे खलु खवणे उ सयावि जइतव्वं॥१॥ उक्तो नामनिष्पन्नो निक्षेपः, इदानीं सूत्रालापकस्या-
वसरः, असावावत्सूत्रं निपतितं तावद्वक्तव्यं, सूत्रं चेदं-'अट्ठ कम्माइं वोच्छामी' त्यादि(१२६७-६४१)सर्वे, तेषां कर्म्मणां चतुः-
प्रकारो बन्धो भवति प्रकृतिबन्धः स्थितिबन्ध अनुभागबन्ध प्रदेशबन्ध. इति, प्रकृतिशब्देन स्वभावो भेदश्चाभिधीयते, स्थितिः
कालावस्थानं, अनुभावो यो यस्य कर्म्मणः शुभो अशुभो वा विपाकः, प्रदेशबन्धः जीवप्रदेशानां कर्म्मपुद्गलानां च सम्बन्धः, तत्र
प्रकृतिबन्धो द्विविधः मूलोत्तरभेदः, अष्टौ मूलप्रकृतयः, तद्यथा-ज्ञानावरणीयं दर्शनावरणीयं वेदनीयं मोहनीयं आयुष्कं नामं गोत्रं
अन्तरायमिति, ज्ञानमावृणोतीति ज्ञानावरणीयं, दर्शनमावृणोतीति दर्शनावरणीयं, वेदनां करोतीति वेदनीयं, मुह्यतीति मोहनीयं,
येन नारकादिभावास्तिष्ठति तदायुष्कं, गतिजात्यादिभिः प्रकारैर्नामयतीति नाम, प्रधानमप्रधानं वा करोतीति गोत्रं, अन्तरायं
करोतीति अन्तरायिकं, इदानीं उत्तरप्रकृतयोऽभिधीयंते-ज्ञानावरणं पंचप्रकारं आभिनिबोधिकश्रुतावधिमनःपर्यायकेवलानि, एषा-
मावरणं, दर्शनावरणं नवभेदं चक्षुरचक्षुरवधिकेवलानि तेषामावरणं, निद्रा निद्रानिद्रा प्रचला प्रचलाप्रचला स्त्यानर्द्धिरिति, एषामुदयं
करोतीति,वेदनीयं सातमसातं च,तयोरुदयं करोतीति,मोहनीयं अष्टाविंशतिभेदं,तत्समासतो द्विविधं-दर्शनमोहं चरित्तमोहं, दर्शनमोहं

मसभेदं अनन्तानुबन्धिनः क्रोधमानमायालोभाः सम्यक्त्वं सम्यग्मिथ्यात्वं मिथ्यात्वं, चारित्तमोहनीयं एकविंशतिभेदं अप्रत्याख्यानाः क्रोधादयश्चत्वारः प्रत्याख्यानावरणा क्रोधादयश्चत्वारः संज्वलनक्रोधादयश्चत्वारः हास्यरत्यरतिभयशोकजुगुप्सास्त्रीपुंनपुंसकवेदा, एषामुदयादेतानि भवन्ति, आयुष्कं चतुर्भेदं नरकतिर्यग्योनिमनुष्यदेवानि, एषामुदयात्, नाम द्विचत्वारिंशद्भेदं शुभमशुभं च अनयोरुदयात्, गोत्रं द्विविधं, शुभमशुभं च अनयोरुदयात्, अन्तरायं पंचप्रकारं— दानलाभभोगोपभोगवीर्याणि च, एतान्यपि तदुदयादेव भवंति। इदानीं स्थितिबन्धोऽभिधीयते- णाणावरणीयस्य स्थितिः जघन्येनान्तर्मुहूर्त्तं उत्कृष्टेन त्रिंशत्सागरोपमकोटाकोट्यः त्रीणि च वर्षसहस्राणि आबाधा अंतरं भवति, बाधृ लोडने, न बाधा अबाधा, तत्र उदयो न भवतीत्यर्थः, तेश्च गतिस्थितिरूना भवति, एवं दर्शनावरणीयान्तराययोः, वेदनीयस्थितिर्जघन्येन द्वादश मुहूर्त्ता उत्कृष्टेन त्रिंशत्सागरोपमकोटीकोट्यः, शेषं तदेव, मोहनीयं द्विविधं-दर्शनमोहनीयं चारित्रमोहनीयं च, दर्शनमोहनीयं जघन्येनान्तर्मुहूर्त्तं उत्कृष्टेन चत्वारिंशत्सागरोपमकोटीकोट्यः, चत्वारि वर्षसहस्राण्याबाधा अन्तरं भवति, शेषं तदेव चारित्रमोहनीयस्य जघन्येनान्तर्मुहूर्त्तं उत्कृष्टेन सप्ततिः सागरोपमकोटाकोट्यः, सप्त वर्षसहस्राणि आबाधा अन्तरं भवति, शेषं तदेव, आयुष्कस्य जघन्येनान्तर्मुहूर्त्तं उत्कृष्टेन त्रयस्त्रिंशत्सागरोपमानि, नामगोत्रयोर्जघन्येन अष्टौ मुहूर्त्ता, उत्कृष्टेन विंशतिः सागरोपमकोटाकोट्यः, वर्षसहस्रद्वयं आबाधा अंतरं भवति, शेषं तदेव। ईर्यापथस्य कर्म्मणः स्थितिर्जघन्येन उत्कृष्टेन च समयः, अनुभावप्रदेशबन्धौ पूर्वोक्तौ, कर्म्मबन्धकरणानां संवरः करणीयः, एतानां क्षपणं प्रति यत्नः करणीय इति, ब्रवीमि, नयाः पूर्ववत् ॥ इति त्रयस्त्रिंशत्तममध्ययनं समाप्तम् ॥

उक्तं त्रयस्त्रिंशत्तमं, इदानीं चतुस्त्रिंशत्तमं उच्यते, तस्य कोऽभिसम्बन्धः? त्रयस्त्रिंशत्तमे कर्मोक्तं, चतुस्त्रिंशत्तमे तत्कारणभूता लेश्या,

अनेन सम्बन्धेनायातस्याध्ययनस्यानुयोगद्वारचतुष्टयं पूर्ववद् व्यावर्ण्य नामनिष्पन्ने निक्षेपे लेसज्झयणं, 'लेसाणं निक्खेवो०'
अनेन सम्बन्धेनायातस्याध्ययनस्यानुयोगद्वारचतुष्टयं पूर्ववद् व्यावर्ण्य नामनिष्पन्ने निक्षेपे लेसज्झयणं, अकर्म्मद्रव्यलेश्या, अकर्म्मद्रव्यलेश्या द्विविधा-
(५३८-४७नि०६५१)इत्यादि गाथा दश,व्यतिरिक्ता द्रव्यलेश्या द्विविधा-कर्म्मलेश्या अकर्म्मद्रव्यलेश्या,अकर्म्मद्रव्यलेश्या द्विविधा- सप्तमा संयोगजा, लेश्याप्रायोग्यद्रव्याणि परिगृह्यन्ते,जोगा
जीवानामजीवानां च, जीवलेश्या भव्याभव्ययोः, सा सप्तविधा,कृष्णादयः, सप्तमा संयोगजा. लेश्याप्रायोग्यद्रव्याणि परिगृह्यन्ते,जोगा
बज्झा बज्झंतगा य पत्ता उदीरणावलियं(५४८)जीवलेश्या द्विविधा चन्द्रादि ग्रन्थत एव ज्ञायन्ते, कर्मद्रव्यलेश्या षड्विधा कृष्णादि,
अत्रापि जीवसंबद्धानि द्रव्याणि परिगृह्यन्ते,भावलेश्या द्विविधा-विशुद्धा अविशुद्धाः,उपशमे क्षये च, शेषं गतार्थं, उक्तो नामनिष्पन्नो
निक्षेपः,इदानीं सूत्रालापकस्यावसरः,अस्माद्यावत् सूत्रं निपतितं तावद्वक्तव्यं, सूत्रं चेदं-'लेसज्झयणं पवक्खामी०' ॥१२९२-६५२॥
इत्यादि,सर्वं,लेश्यानां दश कारणानि नामादीनि वक्तव्यानि,कृष्णलेश्यावर्णःजीमूतो-मेघ',स च स्निग्धः,गवलं-महिषं शृंगं, रिष्ठो-द्रोण-
काकः,कापोते कोइलछगो तेलंकरका,रसा जह कडुगतुंबगादी,गंधा गोमडाती,स्पर्शो जहा करगयादि,परिणामो उत्तमाधममध्यमस्त्रिविधः,
स एव त्रिभिर्गुणितो नवभेदो भवति, नव त्रिभिर्गुणिताः सप्तविंशतिः, सप्तविंशति त्रिभिर्गुणिता एकाशीति एकाशीतिस्त्रिभिर्गुणिता
द्वे शते चत्वारिंशे भवतः, कृष्णाद्यास्तिस्रो लेश्या दुर्गतिगमनाय भवन्ति, लेश्यापरिणामस्य आदिसमये अन्तसमये वा न कश्चित्
म्रियते, यदा तु अन्तर्मुहूर्ते गते शेषे वा भवति तदा परभवं गच्छति, अपसत्थाओ परिवज्जेजा, पसत्थाओ अहिट्ठए मुणित्ति, बेमि,
नयाः पूर्ववत् ॥ इति चतुस्त्रिंशत्तमं अध्ययनं समाप्तम्

उक्तं चतुस्त्रिंशत्तमं, इदानीं पंचत्रिंशत्तमं, तस्य कोऽभिसम्बन्धः ?, चतुस्त्रिंशत्तमे लेश्याऽभिहिता, पंचत्रिंशत्तमे अणगार-
गुणा अभिधीयन्ते, अनगारश्च अप्रशस्तलेश्याविरहितो प्रशस्यलेश्यायुक्तो भवति, अनेन सम्बन्धेनायातस्यास्याध्ययनस्य अनु-

योगद्वारचतुष्टयं पूर्ववत् व्याख्येयं नामनिष्पन्ने निक्षेपे अणगारमार्गगती 'अणगारे निक्खेवो०' ॥५४९-५०।६६३॥ इत्यादि गाथाद्वयं, व्यतिरिक्तं निह्नवादि, भावे सम्यग्दृष्टिः अगारवासादिनिर्मुक्तः, उक्तो नामनिष्पन्नो निक्षेपः । इदानीं सूत्रालापकस्यावसरः, अस्मायातम् एवं निपतितं तावदुक्तव्यं,एवं चेदं 'सुणेह मे एगमणे' इत्यादि (१३५३-३६८)सर्वं ' पंज संग ' एसो गीत शास्त्र परिवर्जयेत्, पक्कान्ने, परेण आत्मार्थकृते यामं नराभिरोचयेत्, नैव स्वयं गृहाणि कुर्वीत नैव कारापयेद् नैवानुजानीयात, यस्मादत्र त्रसस्थावराणां दृश्यते वधः, तथा भक्तपाने च करणकारणानुमोदने त्रसस्थावराणां वधः, इन्धनं प्राप्य विसर्पति अग्निं, यतो वारय, संयमयात्रार्थं भुञ्जीत, न रसार्थं, न चन्दनपूजनादि प्रार्थयेत् । धर्मशुक्ले ध्याने सदा ध्यायेत्, पश्चिमे काले आहारनिर्याणं कृत्वा, ' निर्ममो निरहंकारो, वीतरागो निराश्रवः । संप्राप्य केवलं ज्ञानं, शाश्वतं परिनिर्वृतः ॥ ' इति ब्रवीमि, नयाः पूर्ववत् । इति पञ्चत्रिंशत्तमं अध्ययनं समाप्तम् ॥

उक्तं पञ्चत्रिंशत्तमं, इदानीं षट्त्रिंशत्तमं, तस्य कोऽभिसम्बन्धः ?, पञ्चत्रिंशत्तमे अनगारगुणा अभिहिताः, षट्त्रिंशत्तमे जीवाजीवविभक्तिरभिधीयते, अणगारेण च जीवाजीवविभक्तिर्ज्ञातव्या, अनेन सम्बन्धेनायातस्यास्य अध्ययनस्यानुयोगद्वारचतुष्टयं पूर्ववद् व्याख्येयं नामनिष्पन्ने निक्षेपे जीवाजीवविभक्तिः, 'निक्खेवो जीवंमि०'॥ (५५२-३।६७१।। इत्यादि गाथाद्वयं, व्यतिरिक्तं गुणपर्यायविमुक्तं जीवद्रव्यं, भावे गुणपर्यायसहितं, जीवपरिणामो दशविधः पंचेन्द्रियाणि क्रोधादयश्चत्वारः मनश्च, सहवर्तिनो गुणाः, क्रमवर्तिनः पर्यायाः,गुणाःप्रशस्ताःअप्रशस्ताश्च,प्रशस्ता ज्ञानादयो,अप्रशस्ता क्रोधादयः,पर्याया नरकादिभवाः,'निक्खेवो उ अजीवे० ॥५५४-१।६७१॥ इत्यादि गाथाद्वयं,व्यतिरिक्तं गुणरहितं अजीवद्रव्यं, भावे गुणपर्यायसहितं अजीवद्रव्यं, परिणामो दशविधः बन्ध- ॥२८०॥

रूपस्पर्शरसगन्धाः शुभा अनुभाव । 'निक्खेवो विभत्ती' इत्यादि गाथा सप्त (५५६-६२।६७१) विभजनं विभक्तिः, जीवानाम-
जीवानां च भेदप्रत्याख्यापनं, जीवानां सिद्धानां असिद्धानां च, अजीवानां रूपीणामरूपीणां च, भावे भावानां विभक्तिः भाववि-
भक्तिः, भावानां भेदप्रत्याख्यापनं, अत्राधिकारः जीवद्रव्यविभक्त्या अजीवद्रव्यविभक्त्या च, जे इति निर्देशे, किलशब्दः परो-
क्षवाची, एवं किल आचार्याः कथयन्ति-ये भव्यास्तेषामपि ये परीतसंसारिणो-भवाभ्यन्तरे सेत्स्यन्तो, पुनरपि भव्यग्रहणं येषां
तदावरणीयकर्म्मणां क्षयोपशमो विद्यते,किल पठन्ति धीरा छत्तीसं उत्तरज्झाए,तम्हा जिणपण्णत्ते अणंतगमपज्जवेहिं संजुत्ते। अज्झाये
जहजोगं गुरुप्पसाया अहिज्जंति॥१॥येषां सिद्धिर्भविष्यति, ये च गंठियसत्ता रागद्वेषबहुला ये च अणंतसंसारिणःते संकिलिट्ठकम्मा कर्म-
भिः ओतप्रोताः ते अयोग्याःउत्तराध्ययनानां,तस्माज्जिनप्रज्ञप्तं अनन्तगमपर्यायैः संयुक्तं तं स्वाध्याययोगेन यथायोगं यथाविधि युञ्जीत,
यो यस्याध्ययनस्य योगः तेन गुरुप्रसादादधीते,उक्तो नामनिष्पन्नो निक्षेपः। इदानीं सूत्रालापकस्यावसरः,अस्मादावत्सूत्रं निपतितं
तावद्वक्तव्यं, सूत्रं चेदं-'जीवाजीवाविभत्ती०' ॥१३७४ ६७२॥ इत्यादि,सर्वं, विभजनं विभक्तिः,भेदप्रत्याख्यापनमित्यर्थः, शृणुत
तां मम, क एवमाह-सुधर्मस्वामी जम्बूनामं ब्रवीति, तं०-जीवाजीवात्मको लोकः, स च क्षेत्रकालभावादिभिरनुगन्तव्यः, अजीवाऽ-
रूपिणो दशविधा, धम्मत्थिकायाधर्मास्तिकायः सम्पूर्णः परिगृह्यते, देशः त्रिभागचतुर्भागादि, प्रदेशो निरंशः एव धर्मास्तिकायः,
आकाशं च, कालो, दशधा, धर्माधर्मौ लोकालोकप्रमाणं, समयक्षेत्रे कालः, द्रव्यार्थिकनयाभिप्रायात्सर्वं अनाद्यपर्यवसितं, पर्याया-
र्थिकस्य सादिपर्यवसितं, रूपिणश्चतुर्विधा, स्कन्धो अचित्तमहास्कन्धादि सम्पूर्णः परिगृह्यते, देशस्त्रिभागचतुर्भागादि, प्रदेशोऽ-
संख्येयतमोऽनन्ततमो वा प्रदेशः, परमश्चासावणुश्च परमाणु, निरंशः, क्षेत्रतः स्कन्धा, परमाणवः, लोकालोकौ भजनीयौ, कालतः

णातवे परिनिव्वुते। छत्तीसं उत्तरज्झयणे,भवसिद्धिय सण्णिये॥१॥त्ति,इति परिसमाप्तौ उपप्रदर्शने च,प्रादुः प्रकाशे,प्रकाशीकृत्य-प्रज्ञापयित्वा बुद्धः-अवगतार्थः ज्ञातकः ज्ञातकुलसमुद्भवः वर्द्धमानस्वामी, ततः परिनिर्वाणं गतः, किं प्रज्ञपयित्वा ?, षट्त्रिंशदुत्तराध्ययनानि भवसिद्धिकसंमतानि-भवसिद्धिकानामेव संमतानि, नाभवसिद्धिकानामिति, मत्रीम्याचार्योपदेशात्, न स्वमनीषिकया, नयाः पूर्ववत् ॥

वाणिजकुलसंभूओ, कोडियगणिओ उ वयरसाहीतो। गोवालियमहत्तरओ, विक्खाओ आसि लोगंमि ॥ १ ॥
ससमयपरसमयविऊ ओयस्सी दित्तिमं सुगंभीरो। सीसगणसंपरिवुडो वक्खाणरतिप्पिओ आसी ॥ २ ॥
तेसिं सीसेण इमं, उत्तरज्झयणाण चुण्णिखंडं तु। रइयं अणुग्गहत्थं, सीसाणं मंदबुद्धीणं ॥ ३ ॥
जं एत्थं उस्सुत्तं, अयाणमाणेण विरतितं होज्जा। तं अणुओगधरा मे, अणुचिंतेउं समारेंतु ॥ ४ ॥

षट्त्रिंशोत्तराध्ययनचूर्णी समाप्ता, ग्रन्थाग्रं ॥ ५८५० ॥ उत्तराध्ययनचूर्णिः संमत्ता ॥

इति श्रीउत्तराध्ययनानां षट्त्रिंशतश्चूर्णिः

* समाप्ता *